श्रीमहादेव्यै नमः

गोरक्षग्रन्थमालाया अष्टविंशं पुष्पम्

योगिराजमहावैयाकरणश्रीमद्भर्तृहरिविरचितो

# वाक्यपदीयब्रह्मकाण्डः

परीक्षोपयोगिन्या टीकयासंवलितः

टीकाकार—

योगिशङ्करनाथःफलेग्रहिः

अवेद्यनाथेन यतीन्द्रवर्त्मनाऽऽ
त्मना मुदा वाक्यपदीयपुस्तकम् ।
स्वकीयरिक्थेन विकाशितं मुदे
विचक्षणानां पदवर्त्मवर्तिनाम् ॥

कल्प सं०—१९७२९४९०५३
वि० सं०—२००९

प्रथमावृत्तिः १००० ] [ मूल्यमेक मुद्रा १)



संरक्षक
यो० प्र० उपप्रधान
श्री अवेद्यनाथ वेदान्तवागीश तर्कचूडामणि गोरक्षपुर

श्रीमहादेव्यै नमः

गोरक्षग्रन्थमालाया अष्टविंशं पुष्पम्

योगिराजमहावैयाकरणश्रीमद्भर्तृहरिविरचितो

# वाक्यपदीयब्रह्मकाण्डः

परीक्षोपयोगिन्या टीकयासंवलितः

टीकाकार—

योगिशङ्करनाथःफलेग्रहिः

अवेद्यनाथेन यतीन्द्रवर्त्मनाऽऽ
त्मना मुदा वाक्यपदीयपुस्तकम् ।
स्वकीयरिक्थेन विकाशितं मुदे
विचक्षणानां पदवर्त्मवर्तिनाम् ॥

कल्प सं०—१९७२९४९०५३
वि० सं०—२००९

प्रथमावृत्तिः १००० ] [ मूल्यमेक मुद्रा १)



संरक्षक
यो० प्र० उपप्रधान
श्री अवेद्यनाथ वेदान्तवागीश तर्कचूडामणि गोरक्षपुर

अल्पीयसाऽनेहसा योगप्रचारिणी द्वारा प्रकाशितानां

## ग्रन्थानांनामानि

आदिमत्स्येन्द्रगोरक्षजलन्धरपदानुगा ।
योगप्रचारिणी भूया त्सभा भव्याय भारते ॥१॥
मृगस्थली स्थली पुण्या भालं नेपालमण्डले ।
यत्र गोरक्षनाथेन मेघमालासनीकृता ॥२॥

१–गोरक्षस्तुतिमञ्जरी
२–गोरक्षयोगमञ्जरी
३–गोरक्षसहस्रनाम
४–गोरक्षसहस्रनाम गकारादि
५–श्रीगोरक्षस्तोत्र भूतिः
६–गोर्खावंशावली
७–योगबीजम्
८–योगसाहस्री
९–श्रीनाथग्रन्थसूचिः
१०–श्रीनाथकथासारः
११–श्रीनाथ तीर्थावली
१२–नवनाथकथा
१३–नवनाथकथा ( गुजराती )
१४–भैरवनाथावतारकथा
१५–आदेशार्थप्रकाशः
१६–मत्स्येन्द्रपद्यशतकम्
१७–महार्थमञ्जरी
१८–सांख्यवसन्तः
१९–शान्तिचरितम्
२०–हीरानाथचरितम्
२१–भर्तृहरिनिर्वेदनाटकम्
२२–नीलकण्ठयात्रा
२३–सिद्धचर्पटनाथपद्धतिः
२४–चर्पटशतकम्
२५–दिव्योपदेशः
२६–संस्कृतपारसीकपदप्रकाशः
२७–भक्तविजयकाव्यम्
२८–वाक्यपदीयब्रह्मकाण्डः
२९–अमरकथा
३०–अमरालोकः
३१–युक्तेन्दुवृत्तबिन्दुः
३२–नियमावली

ॐ

नमः श्रीनाथाय तेजसे

# समाहृतिः

अस्मिन् वाक्यपदीये शब्दब्रह्मवादः प्रदर्शितः। शब्दं विनाकिमपि नास्ति। वेदोपि शब्दरूपस्तम्भः। अर्थोऽपिशब्दाधारः। शब्दं विना पदार्थं न प्रत्येतिपुमान्। संज्ञा हि संज्ञिनं परिचाययति नतु संज्ञी संज्ञाम। आनुपूर्वीक्रमेण बीजरूपेण संस्कारतया बुद्धौ ये शब्दा स्तिष्ठन्ति त एव स्फोटरूपेण कथ्यन्ते एतेभ्य एवार्थः परापश्यन्तीक्रमेण स्फुटति सच नादाभिव्यङ्ग्यः स्फोटः। ते शब्दानित्याः सन्ति। वेदोऽपि तेनैव क्रमेण परमेश्वरबुद्धौ तिष्ठति। वेदसृष्टिः शब्द रूपा। जगत्सृष्टिरर्थरूपा। द्वयोरपिसम्बन्धस्तादात्म्यः। अयं प्रपञ्चो वाक्यपदीये स्वयं द्रष्टव्यः। योगिशङ्करनाथफलेग्रहिणापि, एतट्टीकायां संक्षेपेणैव दर्शितः। इदानीं भर्तृहरिमधिकृत्यकिंचिद्वच्मि, बङ्गविश्वकोषकारो लिखति - अयं भर्तृहरिर्महावैयाकरणः कविरप्यासीत्। तत्र भवानुज्जयिनीराजस्य विक्रमादित्यस्य ज्यायान्भ्राता त्यागीभूत्वा भगवतो गोरक्षनाथादमरीभावं योगबलमासाद्य भर्तृहरिः सार्वभौमवृत्तिरकुण्ठितवेदवृत्तिर्व्यराजत। एतत्प्रणीताः शतकादिकाव्यग्रन्थास्तथावाक्यपदीय-हरिकारिकासूत्ररूपा व्याकरणग्रन्था एवं महाभाष्यदीपिका महाभाष्यत्रिपदी व्याख्या च सम्प्राप्यन्ते। महामहोपाध्याय दुर्गादत्तः साहित्यदर्पणभूमिकायांकथयति—अयं राजर्षिर्भर्तृहरि भर्तृहरिनिर्वेदनाम्नो नाटकस्यनायको विभाव्यते भार्याचास्यभानुमतीविशुद्धचरितैवासीत्। एनेन भर्तृहरिणा नेके ग्रन्थाव्यरचिषत, ये वाक्यपदीयशतकादिनाम्ना व्यवह्रियन्ते। अयं महावैयाकरणो विक्रमादित्यस्य ज्यानान् सहोदरोगन्धर्वसेनाख्यस्य राज्ञस्तनूजत्वेन पप्रथे। गोरक्षनाथभगवतः संन्यासाश्रमोऽग्राहि काश्याम्।

तत्र भवान युधिष्ठरमीमांसको लिखति—संस्कृतव्याकरणशास्त्रे तिहासेसप्रमाणम्—महाभाष्यं विलुप्तं जातमाचार्यभर्तृहरिणा सम्पूर्णं समुद्धृतम्। भर्तृहरेः समयः वि० सं० ४५० एतस्मादपि बहुपूर्वः। महाभाष्यस्य ज्ञातासूपलब्धासु टीकासु सर्वाभ्यः प्राचीना प्रामाणिकी भर्तृहरेष्टीका। वैयाकरणनिकाये पतञ्जलेः पश्चाद् भर्तृहरिरेवासदृश एतादृशोऽजनि, य सर्वेवैयाकरणा उपवीणयन्ति प्रमाणाध्वनि राजशीर्षण्यमद्धा। "नचागमादृतेधर्मस्तर्केण व्यवतिष्ठते" एतेन परमवैदिको धर्मात्माभर्तृहरिः प्रतीयते। भारतीयजनश्रुत्यनु सारेण भर्तृहरि र्महाराजाधिराजविक्रमादित्यस्य सोदर्योभ्राता। एतं पक्षं निराकरिष्णु प्रमाणान्तरं नास्ति। वाक्यपदीयग्रन्थः काशिकाग्रन्थाद्दुर्गसिंहात्कुमारिलात्स्कन्दस्यनिरुक्तभाष्यादपि प्राचीनः। धर्मपालस्य मृत्युतः वि सं० ६२७ तमेब्देऽजायत वाक्यपदीय रचना धर्मपाला दप्यनर्वाचीनास्ते। विक्रमाब्दस्यप्रागेवषट्शत्या ६०० वाक्यपदीयरचना। इन्दूद्धरणात्स्पष्टं यद् भर्तृहरिः—वि० सं० चतुःशत्या ४०० अर्वाचीनो नास्ति। वाक्यपदीयकारभर्तृहरिकृता जैमिनीय मीमांसावृत्तिः शबरादपि प्राचीनास्ति। भर्तृहरिकृतमहाभाष्य दीपिकाया विलोकनेन ज्ञायते, भर्तृहरिमीमांसायाः पारदृश्वा बभूव। भर्तृहरिः शबरस्वामिनः प्राग्भावी। भर्तृहरिसिद्धान्तेन धर्मोध्रुवोऽध्वरादिना वृषस्याभिव्यक्तिर्भवति। आचष्टे शबरस्वामी आगादिकमेवधर्मः। इतरेऽध्वरोत्पन्नमपूर्वमेवधर्मं संगिरन्ते। एतेनायंहलंन प्रतिभाति विस्पष्टं विज्ञायते—भट्टजयन्तोक्ता वर्षीयासो मीमांसकाः शबरादपि प्राग्वर्तिनो वरीवृत्यन्ते। भर्तृहरिस्तुतेभ्योऽपि प्रागभूत्। भारतीयजनश्रुत्यनुसारेण भर्तृहरिर्विक्रमादित्यस्य ज्यायान् भ्राता। "नह्यमुलाजनश्रुतिः" अतस्तथ्यांशोऽवश्यः। काश्यां नेदीयसी चुनारगढ़किलाभिधाने–स्थाने भर्तृहरेरेका गुहाऽभिचाकशीति। इदं दुर्गं विक्रमादित्येन निरमायि तत्र निरूढिरेषा। एवमेव विक्रमा-

दित्यस्य राजधान्या मुज्जयिन्यामपि भर्तृहरेर्गुहास्ति, एषातीव प्रसिद्धिमागता राराजीति । अनेनाद्धापरतया प्रतीयते भर्तृहरिविक्रमादित्ययोः पारस्परिकः कोपि सम्बन्धोनिर्विवादः संजाघटीति ।

## भर्तृहरिविरचितग्रन्थाः

संस्कृतवाङ्मये भर्तृहरिविरचिता निम्नग्रन्थाः प्रसिद्धाः सन्ति—१ महाभाष्यदीपिका २ वाक्यपदीयकाण्डाः १, २, ३ । ३ वाक्यपदीकाण्डयोः स्वोपज्ञटीका, ४ भागवृत्तिः, ५ [illegible] नीतिशृङ्गारवैराग्यविज्ञानाभिधम्, ६ [illegible], ७ [illegible]ः ८ शब्द धातुसमीक्षा । प्राचीनग्रन्थेषु भर्तृहरिनाम्ना यद्वाहरिनाम्ना यान्युद्ध[illegible]न्ते तानि साकल्येनाद्यभर्तृहरिकर्तृकाणि । [illegible]र्निर्दिष्टे भर्तृहरेः [illegible] क्रमशः [illegible]ध्याय्या उपर्यासीत् । इदंतु सिद्धमेवतेन सम्पूर्णस्य महाभाष्यस्य व्याख्याव्यलेखि । भर्तृहरिविनिर्मिताया महाभाष्यदीपिकाया यो हस्तलेखः सम्प्रतिसत्यापयन्नुपलभ्यते, स जर्मनराजधान्यां बर्लिनपुस्तकालयं समाशिश्रियन् । एतस्य [illegible]स्य विषयीभूतः डा० [illegible]र्नोविद्यते. [illegible] प्रतिकृतयो मद्रासपुस्तकालये विद्यमाना बोभुवति । हस्तलेखस्य परिमाणः पंचसहस्रोत्तारसप्तशतीश्लोकानां विवर्त्तते ७५०० । भर्तृहरेः [illegible]स्यैव विशङ्कटा प्रदीपनाम्नी टीका संख्यावतामध्यक्षतामुपैति । एषापि भर्तृहरिसरणिमनुसृत्यैवजाता । उक्तं च तत्रैव—तथापि हरिबद्धेन सारेण ग्रन्थसेतुना ।

क्रममाणः शनैः पारंतस्ययातास्मि पङ्गुवत् । [illegible]काण्डपरिसमाप्तौ हेलाराजो लिखति—

**त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदीकृता ।**
**तस्मैसमस्त-विद्याश्रीकान्ताय हरये नमः ॥**

शब्दकौस्तुभेभट्टोजिदीक्षितोभणति सर्वमुखीनान् व्याकरणा-चार्यान् स्तोतुकामः

**नमस्कुर्वेजगद्वन्द्यं पाणिन्यादिमुनित्रयम् ।**
**श्रीभर्तृहरिमुख्यांश्च सिद्धान्तस्थापकान् बुधान् ॥**

कविप्रवर-नरहरिनाथस्यद्राघीयस्या गवेषणया नेपाले कडङ्गरीय लिप्यांसमुपलब्धे प्राचीनजीर्णताडपत्रे भर्तृहरिःशतकारम्भे नवनाथान् नमस्कृत्याम्नायवन्ध मारभत। महामहोपाध्याय डाक्टर गोपीनाथ कविराजप्रकाशिते गोरक्षसिद्धान्तसंग्रहे—भर्तृहरिणा विचारनाथेन गोरक्षनाथशिष्येण व्याकरणशास्त्रस्योपरि लक्षसंख्यामासेदुष्यः कारिका अकारिषतेति वलक्षमुज्जृम्भते । अहो ! परमेश्वरस्य महा-मायाया इयं महती व्यक्तिगतकृता कृपाऽनुमीयते, यद् दुरूहस्यलक्ष-संख्यकाः कारिकाः । व्याकरणद्रोणाचलस्य महावीरोऽयंहरिः तदातु—अधिकं नोक्त्वेदमुक्त्वा विरम्यते—

**शाब्दं हरेर्यस्यपरानुकम्पयायाबोधयामासबुधोबुधःसमान् ।**
**सेयं हि लक्षाश्रितकारिकावली गोरक्षदेवे नतमस्तका वयम् ॥**

विदुषां विधेयेन—
**गोरक्षपुर वास्तव्येन**
वेदान्तवागीशतर्कचूडामणिपदभाजा**वैद्यनाथेन**

## काश्चन विदुषां सम्मतयः

श्रीकालिकायै नमः

सोऽयं व्याकरणार्णवार्णवमणिर्वेदान्तदुर्धर्षणो,
योगाध्वाध्वरधूम्रधूसरवपुर्धर्मानुगोधीरधीः ।
योगी शङ्करनाथ एष विदुषां नाथोपि दासायते,
व्याख्यां वाक्यपदीयगां समकरोन्मूलार्थविश्लेषगाम् ॥१॥

छात्राणां विदुषां तथा परनृणां सामान्यशास्त्रे धिय,
माक्रष्टुं वरिवर्ति राजपथवद् राज्ञो हरेर्हर्षिणी ।
ऐतिह्यादिगुणैः क्वचित्क्वचिदपि ग्रन्थेऽत्रनानार्थवि,
ज्ञानार्थान् समदर्शयद् बहुमता न्येषा मया वीक्षिता ॥२॥

एवं सम्मनुते—व्याकरणाचार्यः साहित्याचार्य्य न्यायशास्त्री, नेपालराज्यान्तर्गतवसन्तपुरवास्तव्यः पं० श्रीसुरेन्द्र झा शास्त्री।

तथा—सकलशास्त्राटवीसञ्चरणपञ्चाननो वादीन्द्रवृन्दगजघटा संघट्टसंजातविजिगीषेहः-पं० श्रीवेदानन्द झा व्याकरणाचार्यः वेदान्ताचार्यः, न्यायाचार्यः, साहित्याचार्यः, बरेली महाविद्यालय प्रधानाध्यापकः, नेपालवसंतपुर वास्तव्यः ।

योगिशङ्करनाथेन कृता या परमार्थदा ।
टीका वाक्यपदीयस्य सैषा मे रोचते मुदा ॥
आर्यधर्मोपयोगित्वादनार्याणां निरासिका ।
प्रत्ययार्थविहीनापि सद्यःप्रत्ययबोधिका ॥

इति संमनुते—सांवत्सरः पं० सोमदत्त शर्मा गु. सारणवास्तव्यः।

तथा. सा. शारदा प्रसाद रेग्मी

---

# सम्मति

## सभापति श्रीमहन्त दिग्विजयनाथ

### अ० भा० व० अ० योगिमहासभा

प्र० मं० हिन्दुमहासभा गोरक्षपुर उत्तर प्रदेश

संस्कृतवाङ्मय का विकाश—अनादिकाल अव्यवच्छिन्न धारा नियमबद्ध प्रतीपपरिस्थितियों के असकृत् वार समूलोन्मूलन जन्य आधिभौतिक दुःखों से उत्पीडित होता हुआ भी अद्यावधि ऋषियों की नेमि से पृथक् नहीं। संस्कृत में वर्णविन्यास अर्थ विच्युत नहीं, अर्थ भी विन्यासदशानुभविता अपने लक्ष्य का अशरीरी नहीं, इसी गाम्भीर्य ने वाच्यवाचक भाव का प्रसव किया, इतर भाषाओं में ऐसा नहीं, अंग्रेजी का वर्ण विन्यास सांकेतिकपदारूढ है, कलकत्ता लिखने में जहाँ सी को रजिस्टर्ड स्थान मिला, भारतीय हिन्दी कलकत्ता को ककार से ही उद्वसित करेगी, देवदत्त के स्थान में डेवडट्, धर्म के स्थान में ढरमा, इंग्लिश में होता है, अनुस्वार अनुनासिक का काम M से लिया जाता है, संस्कृत में ऐसा नहीं। संस्कृतवाङ्मय में शुद्ध उच्चारण तथानुकूल अर्थ स्वर्ग प्रद है, मैं अधिक नहीं कह कर इतना ही पर्याप्त मानने को उत्सुक हूँ, यह वाक्यपदीय ग्रंथ शब्दब्रह्मवाद का सच्चा आदर्श है, भगवान शब्द समस्तसंसार का नेता है। यह टीका कर्ता योगिसभा के सदस्य हैं, इनका परिश्रम सराहनीय है।

नमः परमात्मने

# ईश्वरमहिमनिदर्शनस्तवः

स्थानप्रयत्नादिविभेदसङ्गिनी
भुक्तिप्रदामुक्तिविधायिनी यदि ।
वेदैश्चतुर्भिश्चयुता त्र को विभुं
विद्या न विद्यान्मतिमानवव्रजेत् ॥ १ ॥

विचित्रतारावलिमण्डितं नभो
रवीन्दुयुग्मेन समं समन्ततः ।
समस्तसंसारविचारगोचरं
भवेत्तदानोऽनुभवे त्क ईश्वरम् ॥ २ ॥

प्रवाति यो नित्यमनन्तभेदनो
यतोऽम्बरात्प्राप्तजनिप्रकर्षणः ।
स स्पर्शवान् रूपविहीनलक्षणो
भवे त्तदा नो नु भवेत्क ईश्वरम् ॥ ३ ॥

स पाचकत्वादिगुणैर्गरिष्ठः
शीतापनोदीतमसोविभेदी ।
स्वर्गस्य पन्था हुतभुङ्नहिस्याद्
विद्यान्महान्तं जगतीह कोना ॥ ४ ॥

इदं स्वदेहस्य गुणानुरूपतां
प्रदर्श्यतत्तज्झरमार्गमाश्रितम् ।
चलज्जलं प्राणविधारकं धरां
दधन्न कः स्यादवचूलयेद्विभुम् ॥ ५ ॥

सुवर्णनीलादिमणिप्रसूरियं
जनाश्रया गन्धवती सुखाश्रया ।
विभिन्नबीजप्रसवोन्मुखाक्षिति—
र्भवे त्तदा नोऽनुभवेत्क ईश्वरम् ॥ ६ ॥

शैला विशालाश्च लता नताश्च
वारिप्रवाहा घनगर्जनानि ।
गुहाविशिष्टा यदि सन्तु नोको
विद्यान्महेशं भगवन्तमाद्यम् ॥ ७ ॥

गङ्गा विहङ्गाकुलकूल-भागा
यमस्वसानाम--सरस्वती च ।
गोदावरी सिन्धुसमाश्रिता च
न स्युस्तदा कः पटतु प्रकाशम् ॥ ८ ॥

विभुं प्रभुं रात्रिदिने गमागमे
क्वचिद् युगानां परिभोगबन्धनम् ।
क्वचित्कृतार्थाः करणीयकारिता
नरा नराणां न भवेद् विवेद कः ॥ ९ ॥

न वृद्धता स्याच्च तथापि वृद्धता
न यौवनं क्वापि चलेच्चलत्यदः ।
न रोगरंहः प्रविशेत्तनौविश
त्यथो भवेन्ना त्र विवेदको विभुम्॥१०॥

मृति र्मदीया न भवेद् भवेन्मृति—
र्म्रियेत पुत्रो न मरिष्यति स्त्रसा ।
न मे स्त्रियाः स्यान्मरणं भवे त्पुन
रियंव्यवस्था न विवेत्तुकोविभुम् ॥११॥

देशाद्धि कस्माच्च पिता समागतः
कस्माच्च देशाज्जननी समागता ।
पुत्रस्वसारौ गुरुबन्धुयातरो
न स्यादयं बन्ध इहेश्वरः कुतः ॥१२॥

वनेषु काष्ठानि विभिन्नभागतः
समेत्य तिष्ठन्ति विदन्तिनात्मनः ।
तथैव ते चात्र विदन्ति नात्मनो
न स्यादयं बन्ध इहेश्वरः कुतः ॥१३॥

क्व तर्हि मातापि समागता गता
क्व तर्हि पुत्रोऽपि समागतो गतः ।
प्रयाणकाले विपथाः समेजना
न कोपि कस्यापि सहोदरः प्रसूः ॥१४॥

अहोऽस्तिधन्यः परमेश्वरो विभु-
रचिन्त्यमायो धवलेन्दुशेखरः ।
समस्तसंसारनियामकः प्रभुः
स्वभूः स्वयंभातिपुरः परात्परः ॥१५॥

समस्तजगतामीश ! ज्ञानगम्यो गुरु र्गिराम् ।
नमोऽस्तु शिरसा तुभ्यं दुःखदात्रे सुखप्रदे ॥१६॥

गोरक्षनाथस्य पुरे मयाश्रमा—
द्वैद्यनाथेन विरज्यवैभवात् ।
तन्मन्दिरे रम्यतरेऽत्र दिग्जय—
नाथस्य शिष्येणविनिर्मितस्तवः ॥१७॥

इतिश्रीविमलयोगिकुलकमलदिवाकरगुणाकरहिन्दुधर्मोद्धारणपरायणा-विकलसकलकलाकलापपण्डितमण्डितानुष्ठाननिष्ठानवद्या-विद्यावि-द्योतित—दिगन्तराल—श्रीमत्परमहंसपरिव्राजकाचार्यभगवद् गोरक्षनाथप्रसादलब्धास्पद **श्री१००८श्रीदिग्विजयनाथ** शिष्येणावैद्यनाथेन निर्मितः स्तवः सम्पूर्णः ।

---



नमः श्रीनाथाय ।

# वाक्यपदीयम्

## महाराजयोगिराजमहावैयाकरणभर्तृहरिविरचितम्



शङ्करं शङ्करं नत्वा नामं नामं गुरोः पदम् ।
शारदां पारदां नत्वा गोरक्षं रक्षकं तथा ॥१॥
गणनामधिपं भूयो भूपं भर्तृहरिं हरिम् ।
व्याख्या वाक्यपदीयस्य ब्रह्मकाण्डे विधीयते ॥२॥

सन्त्यस्य टीका विबुधैः कृतास्तथा,
प्यनादृता स्यान्न मदीयपद्धतिः ।
तालीफले सत्यपि किंफलेप्सुभि-
र्नास्वाद्यते हैमवती फलेरुहा ॥३॥

गम्भीरः क्व हरेर्भावो योगिराजस्य भूपतेः ।
द्रव्येशस्य पथा गन्तुं समीहे स्वधियस्तथा ॥४॥

श्रीमानुज्जयिनीश्वरो विजयते गन्धर्वसेनात्मभू-
र्भूपो भर्तृहरिः स विक्रममहीपालाग्रजन्मा महान् ।
कृत्वा वाक्यपदीयवृत्तिशतकत्रय्यादि विद्यानिधिः
सिद्धिं योगपथेन योऽगमदहो ! गोरक्षतो दीक्षितः ॥५॥

मूर्धाकाशयुतः शराद्यवचनः काद्यः शरान्तस्तत-
स्त्वान्त्यश्च । मिलितस्तवर्गकरवान् वर्णोविनिर्णीयताम् ।
नाम्ना संघटनं विधाय विदुषा यन्नाम लब्धं त्वया,
तन्नाम्नाहि कृता मया नृपहरेर्ग्रन्थस्य टीका शुभा ॥६॥

अनादिनिधनं ब्रह्म शब्दतत्त्वंयदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥

शब्दात्मा ब्रह्मैवेत्याह—न आदि निधने यस्य तत् । प्राग भावप्रध्वंसाभावादिरहितं नित्यमुत्पत्तिविनाशरहितमितियावत् । ब्रह्म बृंहणकर्तृ शब्दतत्त्वं भूरितिव्याहरन् भूमिमसृजदितिवचनात् । यदक्षरम्, क्षरण रहितं विवर्त्तते—अतात्त्विकोऽन्यथाभावोविवर्त्तः । अर्थभावेन—घटपदघटितवाच्यसम्बन्धेन । प्रक्रिया प्रक्रमः । जगतः संसारस्य । यतः कारणब्रह्मणः, यतो वा इमानि भूतानि जायन्त इत्यादि ॥ १ ॥

एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।
अपृथक्त्वेपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥ २ ॥

एकमेवकथनेन, सजातीयविजातीयस्वगतभेदानां निरासःस्फुटो भवति । यदाम्नातं कथितं भिदांप्राप्तं भिन्नम् कथं भिन्नमित्यत आह—

शक्तिव्यपाश्रयात्—विभिन्नशक्त्याश्रयात् । तदुक्तंभगवता गारक्ष-नाथेन सिद्धसिद्धान्तपद्धतौ—तस्यैच्छामात्रधर्माधर्मिणी निजाशक्तिः प्रसिद्धा। तस्योन्मुखत्वमात्रेण पराशक्तिरुत्थिता । तस्य स्पन्दन-मात्रेण अपराशक्तिरुत्थिता । ततोऽहन्तार्थमात्रेण सूक्ष्मशक्ति-रुत्पन्ना। ततो वेदनशीला कुण्डलिनीशक्तिरुद्गता। शक्तिभ्यः—अपृकथत्वेऽपि—अभिन्नत्वेऽपि शब्दात्मा परमेश्वरः। पृथक्त्वेनेव पृथगिव वर्ततेऽवभासते । नतु वास्तविकभिन्नता, शक्तिशक्तिमतोर भेदात । अनुमानमपि—अयंघटशब्दो घटाभिधेयस्य वाचकस्तन्नि-ष्ठाभिधेयजननसामर्थ्यात् यन्नैवं तन्नैवं यथा पटः । शक्तिश्च समुदाये समुदायो हि—अर्थवान्निति। यौगपद्यैककालावच्छेदेन संस्काराणाम-नियमात्। ताः शक्तयोभिन्ना अपि नहि शब्दात्मनो व्यापकाद्-भिन्नाः, शब्दात्मापि ताभ्यां नोभिदांगतः। भेददर्शिनामेव भिदा नतु वास्तविकभेद इति भावः ॥ २ ॥

**अव्याहताः कला यस्य कालशक्तिमुपाश्रिताः ।**
**जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ ३ ॥**

यस्य शब्दब्रह्मणः। अव्याहता न व्याहताः स्वरूपेण, अविनष्टा इत्यर्थः, ध्वंसाप्रतियोगित्वमितियावत् । कलाः शक्तयः। कालशक्तिं समयशक्तिमुपाश्रिताः प्राप्ताः । भावभेदस्य, अपरिस्पन्दनसाधन-साध्योभावः पदार्थभेदस्येत्यर्थः । योनयः कारणानि। जन्मादयः षड् विकाराः सन्तीत्यर्थः । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीमे षड्विकाराः। जन्माद्या याः शक्तयस्तासां कालमपेक्ष्यै व संभवात्। कार्यत्वावच्छिन्नंप्रति कालस्य कारणत्वात् । जन्यानां जनकः कालोजगतामाश्रयो मतः। सा कालशक्तिरुत्पादे प्रतिबन्धे च नियामिका। अतएव शब्दात्मा एक एव तथापि तद् गत शक्तयो नाना आञ्जसाः ॥३॥

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।**
**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः ॥४॥**

सा कालशक्तिः शब्दात्मभिन्नाहोस्वित्तत्स्वरूपा, इति बुभुत्सुजनान् बोधयितुमाह तत्रभवान् भर्तृहरियोगिराजो विक्रमादित्यस्य ज्यायान् सहोदरः—एकस्यसर्वबीजस्य सर्वेषां बीजं कारणं तस्य । यस्य शब्दात्मनः अनेकधा नानारूपा । भोक्तृभोक्तव्यरूपेण-भोक्ताच भोग्यं च तयो रूपं तेन । अहं ममेत्यभिमानशीलशालीभोक्ता प्रमेय वर्गसाक्षात्कर्त्ता । भोक्तव्यरूपेणान्नपानादिविषयरूपेण । भोगरूपेण, भोजनपानस्वापादिक्रियारूपेण ।

महामायासम्बन्धाभिधानेनेयं स्थिति र्व्यवहारः ॥४॥

**प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।**
**एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥५॥**

नन्वास्ता मुक्तलक्षणं शब्दात्म ब्रह्म तत्प्राप्तिस्तु निष्कामोत्तमकर्मभिरेवस्तात्तदा किं व्याकरणेति शङ्कांपरिहरन् व्याकरणस्य तत्प्राप्त्युपाय विषयतां प्रदर्शयति योगिराजः—प्राप्त्युपायेति । तस्य परमेश्वरस्य-प्राप्त्युपायः साधनं प्राप्तिसाधनमित्यर्थः । अनुकारः, अनुकरणं प्रतिमा च प्रतिकृतिरितियावत् । अनुकार्य्यानुकरणयोर्भेदाभेदव्यपेक्षापक्षानुगमात् । वेदः, ब्रह्मणोऽनुकारतुल्य इत्यर्थः । सच वेदः एकोऽपि महर्षिभिर्योगियाज्ञवल्क्यादिभिः । अनेकवर्त्मा विभिन्नशाखात्मकः । पृथक् पृथक् समाम्नातः कथितः । एतेनाप्तयोगीश्वरवचसामपि वेदत्वं ध्वनितम् । अन्यथाऽनन्ता वेदा अनन्ता मनवः, इत्यादि न संगच्छेत ॥५॥

**भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।**
**शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ॥६॥**

ननु योगीश्वरमहर्षिकल्पितशाखानामन्योन्यभिन्नत्वेनाविरोधाभावात्तथा च शाखा भेदेनानुष्ठेयकर्माऽपि भिन्नं स्यादिति शङ्का कलङ्कातङ्कपङ्ककणिकाकीर्णवर्त्मपरिहाराय—आह तत्रभवान् गन्धर्वसेनतनूजन्मा हरिः—भेदानामिति ।

**तस्य वेदस्य भेदाः-ऋगयजुः सामाथर्ववेदाख्यास्तेषां भेदानां बहुमार्गत्वं बहुशाखत्वं दृश्यते वर्तत इत्यर्थः ।**

यथा—एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एक विंशतिधा बाह्वृच्यं, पञ्चदशधेत्येके नवधावथर्णो वेदः, तस्य वेदस्य भेदानां शाखानां स्कन्धानाम्—एकत्र एकस्मिन् कर्मणि—अङ्गता शेषता तस्यां शाखायामकथितानामपितदन्यशाखोपदिष्टानां सर्वशाखाप्रतिपाद्यमेकं कर्म, परस्परमुपकार्योपकारकभावसम्बन्धः । अन्यथा कर्मविप्लवः स्यात् । तर्हि कथंभेद इत्याह—शब्दानामिति—तस्य वेदस्य शाखासु शब्दानां यतशक्तित्वं यता नियता शक्तिः बोधजनकता तेषांभावस्तत्त्वम् । शब्दक्रमापेक्षयाऽर्थक्रमोबलीयानिति न्यायेन सृष्टि वेदोपि सूचितः । शब्दवेदे—गोधूमयवश्यामाकप्रियङ्गु प्रभृतीनां शब्दानां विद्यमानतायांसत्यामपितद्वाच्यालाभात्सृष्टिवेदस्यैव बलीयस्तमपिसूचितं भवति ॥ ६ ॥

**स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ।**
**तमेवाश्रित्यलिङ्गेभ्यो वेदविद्भिः प्रकल्पिताः ॥ ७ ॥**

ननु वेदानां प्रमाणत्वे स्मृतिनामप्रामाण्यं स्यादित्याशङ्कामपाकर्त्तुमाहराजर्षिः—स्मृतय इति—वेदविद्भिः, वेदज्ञैः । तमेव वेदमाश्रित्य वेदमूलार्थमादायेत्यर्थः । लिंगेभ्यो हेतुभ्यः । प्रकारताज्ञानपरिवृंहणास्पदेभ्यः श्रुत्यनुगुणलब्धार्थेभ्यः इतियावत् । दृष्टंचादृष्टं च प्रयोजने यासां ता—दृष्टादृष्टप्रयोजनाः । दृष्टफलं रसरत्नाकरचरका-

दिग्रन्थबोधनद्वारा। अदृष्टं शिष्टाचारानुगतज्ञानज्ञाप्यम्। बहुरूपाः अनेकविधाः। स्मृतयः—मन्वादिशास्त्राणि। उपलक्षणमेतत्—महार्थमञ्जरीकुलार्णवप्रभृतीनि तन्त्राण्यपि ग्रहीतव्यानि, तन्त्राणामपि वेदमूलकत्वादिति, वेदनिष्ठपारमेश्वरज्ञानस्याऽऽनन्त्यात्स्मृतीनामानन्त्यं स्वाभाविकमेवेत्यपिध्वनितं भवति ॥ ७ ॥

**तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः।**
**एकत्विनां द्वैतिनां च प्रवादा बहुधामताः ॥ ८ ॥**

ननु वेदस्यैकरूपत्वात्स्मृतिग्रन्थानामनेकरूपत्वान्न नूनमेव मतभेदाशङ्कास्यात्तदुत्तरेमाह विमलक्षत्रियकुलकमलदिवाकरः श्रीहरिः—तस्यार्थेति तस्य वेदस्य, अर्थवादरूपाणि प्रशंसार्थवादनिन्दार्थवादात्मकवाक्यानि। "अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं भवति" "नरकेऽनियतास्थिति" सोऽरोदीत् मादकै "मांससंलिष्टैर्निन्दकैर्भेदकैस्तथा। अर्च्यते देवता येन, स याति नरकं नरः" ॥ इत्यादीनि निश्रित्य निर्णीय, स्वविकल्पजाः स्वीयविकल्पसमुत्थिताः। एकत्विनामद्वैतवादिनां—यथाह भगवान् गोरक्षनाथो महार्थमञ्जर्याम्—"त्रिपुटीमयं खलु समस्तं तत्रज्ञेये च ज्ञातरि च समम्। दृढग्रन्थिज्ञानकला कलयति त्रैलोक्य मेकलम् ॥" द्वैतिनां द्वैतवादिनां 'द्वासुपर्णा' य आत्मनितिष्ठन्" अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्त भोगामजोऽन्यः। इत्याद्याउभयेषां प्रवादाः सिद्धान्ताः बहुधा बहुरूपा मताः स्वीकृताः। यतिभिरिति कर्तुः पदमूहनीयम् ॥ ८ ॥

**सत्या विशुद्धिस्तत्रोक्ता, विद्यैवैकपदागमा।**
**युक्ता प्रणवरूपेण सर्ववादाविरोधिनी ॥ ९ ॥**

नन्वेवं प्रवर्तमानेष्वपवादेषु किं सत्यं तत्राह—शतकादिग्रन्थकर्ता हरिः—तत्रोक्तप्रवादेषु परमाणुवादप्रकृतिवादप्रभृतिमतानुबन्धेषु।

विशुद्धिः, रागद्वेषादिराहित्यम् । सर्ववादाविरोधिनी—सर्वसिद्धान्तसम्मता । प्रणवरूपेण प्रकर्षेण नौति स्तौतीतिप्रणवः । ओंकाररूपेण युक्ता वाक् । विद्यासर्वार्थप्रकाशिनी सत्या यथार्था तदुक्तं भगवता गोरक्षपद्धतौ—अनयासदृशी विद्या अनयासदृशो जपः । अनया सदृशं ज्ञानं न भूतन्न भविष्यति ॥ भूर्भुवः स्वरिमेलोकाः सोमसूर्याग्निदेवताः । यस्य मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ इत्यादि । विस्तरभिया नेह प्रापञ्चि तत एवावधेलिमं संख्यावद्भिः । एकपदागमेत्यस्य, एकपदरूपाश्रुतिरित्यर्थः । यद्वा पदं "सुप्तिङन्तं पदम्" इत्यस्यप्रतिरूपकम् । अपदं न प्रयुञ्जीतेति महाभाष्यकारः । एकशब्दो मुख्यार्थे । अद्वैतपदे—एकत्व बोधिकाप्रणवरूपाविद्येति ॥ ९ ॥

**विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः ।**
**विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥१०॥**

किं बहुना सर्वेऽपि विद्याभेदाः शब्दात्मनोब्रह्मणः सकाशादेवेत्याह योगिराज :—लोकानां विधातुः स्रष्टुः तस्यप्रणवरूपस्य वेदस्य, अङ्गोपाङ्गनिबन्धनाः—अङ्गानिविधिवाक्यानि । उपाङ्गानिमन्त्रार्थवादोपनिषद्ब्राह्मणादयः । निबन्धनंमूलं येषान्ते । यद्वा-अङ्गानि व्याकरणशिक्षानिरुक्तकल्पज्यौतिषच्छन्दःशास्त्राणि । उपाङ्गानितन्त्र पुराण न्यायमीमांसाधर्मशास्त्राणि निबन्धनं प्रयोजकं येषुते । ज्ञानसंस्कारहेतवः—ज्ञानं सम्यग् ज्ञानं विज्ञानमिति यावत् संस्कारः पुरुषनिष्ठधर्मविशेषः, तयोर्हेतवः कारणानि यद्वा करणानि । विद्याभेदा व्याकरणादयः प्रतायन्ते विस्तृता भवन्ति ॥१०॥

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गंप्राहुर्व्याकरणं बुधाः ॥११॥**

बुधाःपारदृश्वानः । तस्य वेदरूपस्य ब्रह्मण आसन्नं समीपस्थं साधुत्वप्रकारकबोधद्वारा तपसां ब्रह्मचर्याधःशयनचान्द्रायण-सन्तोष-

स्वाध्यायसत्यभाषणपरोपकारेश्वरचिन्तनयोगाऽभ्यासादीनाम् मध्ये उत्तमं दृष्टादृष्टफलजनकतया तपः छन्दसां वेदानां प्रथमं प्रधानमंगं व्याकरणंप्राहुः कथयन्ति ऋतम्भराभरणभूषिता ऋषयः, शब्द साधुत्वा साधुत्वप्रकारकज्ञानं विना न किमप्य-स्तीत्यर्थः। तस्माच्छब्दज्ञानं योगिनामपि परमावश्यकम् ॥११॥

**प्राप्तरूपविभागाया यो वाचः परमो रसः**
**यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ॥१२॥**

प्राप्तरूपविभागाया वाचः, यः परमोरसः, यत् तत्तत्पुण्यतमं ज्योतिः तस्यायमाञ्जसोमार्गः। अन्तःसन्निविष्टात् पश्यन्तीरूपात्शब्दतत्त्वात् प्राप्तो वर्णपदवाक्यलक्षणो रूपविभागो ययाऽथवा वाच्यत्वेन प्राप्तः रूपविभागः, अर्थ विशेषो गवादिः। अपरञ्च प्राप्तरूपविभागः, गवादिरर्थः कार्यकारणभावेन यया, शब्दोहि गवादिरूपेण परिणमते ते च गवादयस्तत्रैव लीनाः सन्तो वाग्रूपेण व्यवतिष्ठन्ते। वाचः सक्रमायाः वाचकत्वादभ्युदयहेतुत्वाद् यः परमउत्कृष्टोरसःसारः व्यवस्थितसाधुभावः शब्दसमूहः। यत्तत् समाधिजबोधपरीक्षितं श्रुतिसिद्धं पुण्यतमं प्रकाशाप्रकाशयोः प्रकाशकं ज्योतिःशब्दाख्यं त्रयः प्रकाशाः योऽयं जातवेदाः, यश्च पुरुषेष्वान्तरः प्रकाशो यश्च-प्रकाशाप्रकाशयोःप्रकाशयिता तत्रैतत्सवमुपनिबद्धंयावत्स्थास्नु चरिष्णुचेत्यादि। तस्य साधुशब्दसमूहस्यज्ञानेऽयं सामान्यविशेषलक्षणवान् व्याकरणरूपश्राञ्जसः सरलः पन्थाः यद्वोपायः' परन्तुलौकिकानामेषशब्दात्मा स्फुटोऽपि नप्रतिभाति तथाच महार्थमञ्जर्यां भगवान् गोरक्षनाथः प्रोवाच—माणिक्य प्रवेक इव निचोलितो निजमयूखलेखया। प्रतिभातिलौकिकानामत्यन्तस्फुटोऽप्यस्फुट आत्मा ॥ प्रतिपदोक्तशब्दपारायणरूपस्तु—अतीवकठिनोमार्गः तथाच महर्षिः श्रीपतञ्जलिरचलनाथः—महाभाष्ये-बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारा-

यणं प्रोवाच नचान्तं जगाम, इति। तथा लघ्वर्थमध्येयं व्याकरणमिति ॥१२॥

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधःशब्दानां नास्ति व्याकरणादृते ॥१३॥**

सम्प्रति भाष्योक्तं व्याकरणस्य पञ्चमं प्रयोजनमाह—राजर्षिः अर्थस्य घटादेः प्रवृत्तौ व्यवहारेसलिलाहरणादिरूपार्थक्रियाकारित्वे, अयंघट इत्यादिशब्दप्रयोगे वा। तथाच—भाष्यम्—चतुष्टयीशब्दानां प्रवृत्तिः जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाः, इति। शब्दा एव निबन्धनंबोधकाः सर्वोहिव्यवहारः शब्दायत्तः, नहि शब्दमनुच्चार्यकश्चित्प्रत्येति, योगिनामपिज्ञानं शब्दमूलकमेव, उद्बोधावस्थायामपि ज्ञानं शब्दाकारतां प्रयाति। अनुमानचेष्टादिकमपि शब्दाकारतां न जहाति। तत्त्वावबोधः, अवैकल्यं साधुत्वम्। देवदत्तस्य गुरुकुलमितिवत्सापेक्षेऽपिगमकत्वात्समासः। निबन्धनमितिनिर्देशो वेदाः प्रमाणतुल्योबुधेलिमः। शब्दस्य द्वैरूप्ये शब्दत्वं साधुत्वंच प्रथमस्य श्रोत्रेन्द्रियग्राह्यत्वेऽपिद्वितीयं साधुत्वं व्याकरणादेव गृह्यते, न श्रोत्रादन्यथाऽनधीतव्याकरणा अपि पांसुलपादहालिका प्रतिपद्येरन्। एतेन "तत्त्वावबोधःशब्दानां नास्तिश्रोत्रेन्द्रियादृते" इति कुमारिलभट्टोक्तमपास्तमिति सूर्यनारायणशुक्लाः। व्याकरणादेव शब्दतत्त्वावबोधो भवति न श्रोत्रादिति भावः ॥१३॥

**तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥१ ॥**

तद् व्याकरणम्, अपवर्गस्य मोक्षस्य द्वारमुपायः। वाङ्मलानां प्रत्यवायहेतूनां वाचोमलानां दुरुच्चारणरूपाणां चिकित्सितम्, आयुर्वेद इव देहस्थानां दोषाणाम्, सर्वविद्यानां पवित्रं पृथि-

व्यामाप इव, विद्यासु इति—अधिविद्यं सर्वासुविद्यासु प्रकाशते प्रद्योतते स्वीक्रियत इत्यर्थः । "एकः शब्दः सम्यगज्ञातः सुप्रयुक्तः स्वर्गे लोकेच काम धुग् भवति" इति महर्षिपतऽञ्जलिः । परापश्यन्तीमध्यमा वैखरीमातृका "एतासां शब्द तत्त्वभूतानां वाचां योगधिया ज्ञानान्मोक्षः शाब्दिकानामिति भगवान् गोरक्षः, स्पष्टमन्यत् ।।१४।।

**यथार्थजातयः सर्वाः शब्दाकृतिनिन्धनाः ।**
**तथैव लोके विद्यानामेषा विद्या परायणम् ।।१५।।**

यथा सर्वाः अर्थजातयः अर्थसामान्यानि घटपटादिसमवेताः । घटत्वपटत्वादिजातयः । शब्दाकृतिनिबन्धनाः—घटपटादिशब्दाना माकृतयो घटपटशब्दत्वादयो निबन्धनं ज्ञापकं यासां ताः । अर्थनिष्ठ सामान्यानां शक्यत्वं शब्दगतसामान्यानां शक्तत्वमितितत्त्वम् । अर्थ गतजातीनां ज्ञानं वाचकादेव । तथैवैषाविद्या व्याकरणं सर्वविद्यानां कोशकाव्यन्यायमीमांसादीनां परायणं स्वघटकपदशक्तिसामञ्जस्यार्थमिति अतः सर्वैरेवाधीयतां व्याकरणम् ।।१५।।

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।१६।।**

सिद्धिसोपानपर्वणां सिद्धिर्मोक्षः, यद्वाष्टसिद्धयः । सोपानमधिरोहिणी तस्य पर्वाणिग्रन्थयः तेषां मध्ये, आद्यं प्रथमं स्थानं पदस्थानं चरणनिःक्षेपस्थलम । इदं व्याकरणं मोक्षमाणानां मुक्तिकामयमानानां सेयमजिह्माऽकुटिला सुखेन गम्या राजपद्धतिः, राजमार्गः, अस्तीति शेषः । शब्दात्मायं स्वयं मोक्षरूपेणोपतिष्ठते । पदार्थानामभावेऽपि साधकबाधकरूपेण शब्दा एव तदाकृतिं बध्नन्ति, रामस्य नाटके रामाभावेऽपि तत्तेजः शब्दैरेव प्रकाश्यते, एवं सति रामभावाः शब्दैरेवप्रकाशिता भवन्ति । अहो ! एष शब्दमहिमाऽगम्यः

सर्वलोकप्रवर्तकः सृष्टः परमेश्वरेण, तस्माच्छब्दज्ञानमत्यावश्यमिति निश्चप्रचम् ॥१६॥

**अत्रातीतविपर्यासः केवलामनुपश्यति ।**

**छन्दस्यश्छन्दसां योनिमात्माछन्दोमयींतनुम् ॥१७॥**

अतीतो नष्टो विपर्यासो भ्रमो यस्य सः । अपगतभ्रमः । सम्यग् ज्ञानवान् । छन्दस्यः, छन्दसेहितः शुद्ध आत्मा जीवः । छंदसां वेदानां योनिं कारणीभूतां छन्दोमयीं वेदरूपां प्रणव रूपां वा तनुं परापश्यन्तीमध्यमाशरीरां वाचमनुपश्यति ॥ तथा च भागवते "स एष जीवो विवरप्रसूतिप्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य राजन्! मात्रा स्वरोवर्ण इति स्थविष्ठः" । इत्यादिभूयः प्रापञ्चि ॥१७॥

**प्रत्यस्तमितरूपाया यद्वाचोरूपमुत्तमम् ।**

**यदग्निनेव तमसि ज्योतिः शुद्धं प्रवर्तते ॥१८॥**

प्रत्यस्तमितानि, आच्छादितानि, अज्ञातानि रूपाणि यस्याः, यथा घट इति प्रथमैकवचनविभक्त्यन्तत्वमाहोस्विन्मध्यमपुरुषैक-विभक्त्यन्तत्वमिति । राजा तृतीया एकवचनेऽथवा प्रथमैकवचने, दद् वर्णद्वित्वं क्रियापदं वा । वाचः—मध्यमाख्यशब्दस्फोटरूपायाः, यदुत्तमं रूपं सखण्डेतरत्वादि अखण्डत्वादीत्यर्थः । तमस्यन्धकारे-ऽज्ञाते च ज्योतिः पदादि प्रकाश इति श्रीद्रव्येशझामहाभागा मैथिलाः नादाभिव्यङ्ग्य इत्यपरे उदाजह्रुः । अग्निना इव व्याकर-णेन शुद्धं प्रवर्तते ॥१८॥

**वैकृतं समतिक्रान्ता मूर्तिव्यापारदर्शनम् ।**

**व्यतीत्यालोकतमसी प्रकाशं यमुपासते ॥१९॥**

वैकृतं समतिक्रान्ता आलोकतमसी व्यतीत्य वाचः, यं मूर्ति-व्यापारदर्शनं प्रकाशम्—उपासते सेवन्त इत्यर्थः । यत्र कस्यापि ग-

तिर्नास्ति तत्र वाच एव ज्ञापिका भवन्ति, कण्ठताल्वादिविहीनाः सत्य आत्मनिष्ठबोधतया स्फोटरूपं प्रकाशमुपसेवन्ते। तथा चोपनिषत्सु—सूर्याभावे पुरुषाः केन बुध्यन्ते? चन्द्रमसा। तदभावे केन बुध्यन्ते नक्षत्रैः। तदभावे केन बुध्यन्तेऽग्निज्योतिषा। तदभावे केन बुध्यन्ते? वाग् ज्योतिषा। तदभावे केन बुध्यन्ते—शब्द ज्योतिषा, तदभावे केन बुध्यन्ते? मनो ज्योतिषा। अत्रैव खलु मध्यमा वाक् स्फोटरूपा सबीजा, आनुपूर्विकनियतवर्णपदा, अयं भावः - घटादिरूपमालोके हीरकमण्यादिप्रकाशश्च—अन्धकारे प्रस्फुरति, मध्यमा वाचस्तु मूर्त्तिव्यापारौ द्वयातिरिक्तेऽपि। अतः शब्दात्मनो व्याकरणस्य प्राशस्त्यमिति ॥१९॥

**यत्र वाचो निमित्तानि चिन्हानीवाक्षरस्मृतेः।**
**शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत् ॥२०॥**

यत्र व्याकरणशास्त्रे वाचो मध्यमावाचः। हृदिस्था इत्यर्थः। निमित्तानि—वर्णपदवाक्यप्रकृतिप्रत्यायादीनि। अक्षरस्मृतेः—अक्षरस्मरणस्य चिन्हानीव, सम्बोधनप्रश्नाकाशवृत्तय इव। शब्दपूर्वेण योगेन प्रकृतिप्रत्ययादिव्युत्पादनेन प्रकृतिः शब्दः प्रत्यया विभक्त्यादयः। यद्वा प्रकृतिर्भूवा दयः प्रत्ययास्तिबादयः। प्रतिबिम्बवत्प्रतिच्छाया—इव। व्याकरणे प्रकृतिप्रत्ययव्युत्पादनंमध्यमायाः, वाचः स्मरणार्थमुद्बोधार्थमिति यावत्। यद्वा यत्र स्फोटाख्ये शब्द ब्रह्मणि, अक्षरस्मरणस्य लिपय इव वाचो वागभिव्यञ्जकस्य प्राकृतध्वनेः, निमित्तानि वर्णाभिव्यक्तिनिमित्तध्वनिनिष्ठा कत्वखत्वगत्वादि जातयः। शब्दपूर्वेणशब्दाभिव्यक्तिपूर्वजातध्वनिना योगेन भेदाग्रहेण तादात्म्येनेति यावत् प्रतिबिम्बे—इव भासन्ते "तत्रतस्येव वतिः" तथा च—महार्थमञ्जर्यां—भगवान् गोरक्षनाथोऽनुकम्प्याह "हन्त!

मुखं प्रतिबिम्बतु प्रतिबिम्बयतु तथा तदपिदर्पणः। दर्पणः पुनर्य-स्मिन् प्रतिबिम्बति सोपिज्ञातव्यः" ॥५८॥२०॥

**अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च।**
**यस्मिन्नुच्चावचावर्णाः पृथक्स्थितिपरिग्रहाः ॥२१॥**

ऋक्च यजुश्चेति द्वन्द्वे-द्वन्द्वाच्चुदषहान्तेतिटचि ऋग्यजुष स्तस्य, अथर्वणाम्, अङ्गीरसां साम्नां वेदानां वर्णा यस्मिन् व्याक-रण उच्चावचाः स एव क्वचिदुदात्तः क्वचिदनुदात्तः क्वचिदात्मना क्वचित्मना क्वचिद् भवति क्वचिद् भवाति, इत्यादिरूपा वर्णाः पृथक् स्फोटभिन्ने स्थितेः परिग्रहः स्वीकारः येषान्ते स्फोटाभिव्यञ्जक-ध्वनिनिष्ठाः। तादृशध्वन्यभिव्यञ्जकवाग्गुसंयोगनिष्ठाः। प्रतिपादिता वर्णा भासन्ने कल्पितविरुद्धधर्माध्यासात्स्फोटविभिन्नभावः। नचा व्यवस्थितप्रयोग प्ररूढपरिपाटीशङ्कनीया, शब्दानामानन्त्यात्सुरैरपि— अशक्य निरसनावसानप्ररोहः ॥२१॥

**यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।**
**तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते ॥२२॥**

यदेकं परमात्मतत्त्वं प्रक्रियाभेदैर्योगसाङ्ख्यन्यायवैशेषिक मीमांसावेदान्तादिदर्शनैः, बहुधाविभिन्नप्रकारेणस्वयुक्तिप्रत्युक्तिभिरि-त्यर्थः। प्रविभज्यते निरूप्यते निगद्यत-इत्यर्थः। तत्परं ब्रह्म शब्दात्मत-त्त्वम्। व्याकरणं शब्दशास्त्रमागम्य सम्प्राप्य मध्यमादिवाग्बोध द्वाराऽधिगम्यते प्राप्यते। ननु केते प्रक्रियाभेदाः? इत्यपेक्षायां संक्षेपतः कथ्यते—महार्थमञ्जरीपरिमलेश्रीगोरक्षेण "लोकायतानां देहात्मा शून्यात्माशून्यवादिनाम्। क्षणात्माक्षणनिष्ठानांभिन्नात्मा भेददर्शिनाम्॥ मीमांसिनामपूर्वात्मा, ब्रह्मात्मा ब्रह्मवादिनाम्। अद्वैतिनामभेदात्मा बहुना वा मिमुच्यते" आक्रीडनंच बालानां स एवं परमो गुरुः स एव चम

हार्थात्मा माहार्थिक मनीषिणाम्" ।। श्रुत्यन्तरेऽपि—"वागेवार्थं पश्यति वागेवार्थं ब्रवीति वागेवार्थं निहितं सन्तनोति। वाच्येवविश्वं बहुरूपं निबध्दं तदेतदेकं प्रविभज्योपभुङ्क्ते।" इत्यादि।। यद्वायदेकं व्याकरणं कचिन्त् क्रियाभदैः प्रयोगसिद्धिप्रकारैः—कापि—"अकः सवर्णेदीर्घः", कापि-अकोऽकि वचनं कचित्सखिशब्दात्सखा, अनङादेशं विधाय-साध्यते। कुत्रापिडाप्रत्ययंविधायसाध्यते। कचि-त्त्व महंशेपलोपं कृत्वा कचिट्टिलोप विधायेत्यादि, एतादृशं व्याकरणं साधूक्तप्रकारं सम्प्राप्य परं ब्रह्माधिगम्यते। नहिशब्दात्परं भावाः केनचिद् विपर्याकृताः शब्दात्माऽर्थाकारमाधत्ते ।।२२।।

**नित्याः शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिः।**
**सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ।।२३।।**

सूत्राणामनुतन्त्राणांभाष्याणां च प्रणेतृभिर्महर्षिभिः शब्दार्थ सम्बन्धा नित्याः समाम्नाताः कथिताः। संज्ञाच परिभाषा च विधि-र्नियमएव च। अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्।। संज्ञा सूत्रं यथा "वृद्धिरादैच्" अदेङ्गुणः "अचोऽन्त्यादिटिः, इत्यादि। परिभाषासूत्रं यथा अलोन्त्यस्य" षष्ठी स्थाने योगा "इत्यादि। विधिसूत्रं—यथा "इको यणचि" इत्यादि। नियम सूत्रं" पतिः समास एव "न लोपः सुप्स्वरसंज्ञा इत्यादि। अतिदेशसूत्रं—स्थानिवदादेशोऽनल्विधौ" इत्यादि। अधिकारसूत्रं "पूर्वत्रासिद्धम्" अङ्गस्य इत्यादि। यद्वाल्पाक्षर समुदाय घटितत्वेसति बह्वर्थबोधकं सूत्रंयथा-"अथातोधर्मजिज्ञासा"अथातोब्रह्मजिसा"योगश्चित्तवृत्तिनि-रोधः" आयात्स्वल्पतरो व्ययः "वायुर्वैक्षेपिष्ठा देवता" इत्यादि। तन्त्राणि—कुलार्णवमहार्णवोड्डीशमहाकालकल्पद्रुमादीनि तान्यनुगतानि अनुतन्त्राणि पुराणवार्तिकादीनि। तेषामनुतन्त्राणाम्, भाष्याणां महा-भाष्यभाष्याणां प्रणेतृभिः कर्तृभिः,महर्षिभिर्व्यासपतञ्जलिविश्वामित्र-

गोतमकणादजाबालिजैमिनिप्रभृतिभिः शब्दार्थसम्बन्धाः, अभिधायकाभिधेय सम्बन्धा नित्या अविचालिताः समाम्नाताः। यैः सूत्रवार्तिकभाष्यानि प्रणायिषत तैरेव शब्दार्थसम्बन्धानां नित्यत्वमाम्नात मित्यर्थः। एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके काम धुग् भवति" इतिश्रुत्या च। वार्तिककृता-सिद्धे शब्दार्थसम्बन्धे" सिद्धन्तुनित्यशब्दत्वात्" भाष्यकृता च—संग्रहे—एतत्प्राधान्येन परीक्षितं नित्यः शब्दः नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यम् सर्वेसर्वपदादेशादाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे तु नित्यत्वं नोपपद्यते॥ एक इन्द्रशब्दः क्रतुशतप्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवतिः इत्यादि भाष्यवचनानि स्पष्टं नित्यत्वमातिष्ठन्ते। शब्दानां नित्यत्वादेवशब्दमुच्चारयन्तोऽर्थप्रत्ययोनतूत्पादयतीति बोधः। अनादाविहसंसारे— अनादिवृद्धव्यवहारमर्यादायाअविच्छेदेनशब्दव्यवहारस्य व्यवस्थितत्वात्। व्यवहारनित्यत्वाच्छब्दानां नित्यत्व मर्यादागतम्। तथा च वार्तिककारोक्तः—"नित्यावर्णा नित्यावेदा इति च सम्प्रदायाविच्छेदात्। नित्यापृथिवीनित्याःपर्वताइतिवत्"॥२३॥

**अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः।**
**अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः॥२४॥**
**कार्यकारणभावेन योग्यभावेन च स्थिताः।**
**धर्मे च प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु॥२५॥**
**ते लिङ्गैश्चस्वशब्दैश्च शास्त्रेऽस्मिन्नुपवर्णिताः।**
**स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्॥२६॥**

साध्वसाधुषु—शब्दार्थसम्बन्धेषु तादात्म्यावगाहिषु येधर्मे धर्मोत्पत्तौ प्रत्यये ज्ञाने स्वादौ वा अङ्गम्-उपकारकाः साधवः शब्दार्थ सम्बन्धास्तेऽस्मिन् व्याकरणे शास्त्रे लिङ्गैः प्रकृतिप्रत्ययैः प्रकृतयो-

भ्वादयः प्रत्ययास्तिबादयस्तैः यद्वा प्रकृतयोगुणाः प्रत्ययाबोधास्तै स्व-शब्दैर्निष्पादितशब्दैः। यल्लुङन्तादिभिः उपवर्णिता उपाव्रर्णिपत, नासाधवस्तेषामर्थावबोध मात्रोपकारकत्वान्नास्ति पुण्यजनकता। तत्र ये प्रतिपादकाः प्रकृतिप्रत्ययरूपा ये चअन्वाख्येयाः पदवाक्यरूपाश्च शब्दा ये अपोध्दारपदार्थाः प्रकृति प्रत्ययार्था ये च स्थितलक्षणाः पदवाक्यार्थरूपाश्च, अर्थाः कार्यकारणभावेन योग्यभावेन तादात्म्येन स्थिताः साधवः। यस्याभिधायकस्य येनाभिधेयेन कार्यकारणभाव स्तस्मिन्नेवार्थे स साधुः। स्मृत्यर्थं पुण्योपचयार्थं यथागमं यथा दर्शनमनुगम्यन्ते। अतएव-अस्वशब्दस्य दरिद्रे साधुत्वेऽपि नाश्वे साधुतेति। पदार्थाद्अपोद्ध्रियन्ते विभज्यन्ते इत्यपोध्दाराः, प्रकृतिप्रत्ययकल्पनयाव्याकरणेन पदानि वाक्यानि चान्वाख्यायन्ते, इत्यन्वाख्येयाः। अयमुत्कलापः—वाक्यार्थेभ्यः पदार्थान् पदार्थेश्चभ्य प्रकृतिप्रत्यार्थानपोद्धृत्य वाक्येभ्यः पदानि पदेभ्यश्च प्रकृति प्रत्ययाः प्रकृतेः प्रकृत्यर्थे प्रत्ययस्य प्रत्ययार्थे शक्तिः साधुत्वं च व्याकरणेन बोध्यते तद् द्वारा पदार्थेपदस्य वाक्यार्थे च वाक्यस्य शक्ति साधुत्वं च ॥२४।२५।२६॥

**शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम्।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥२७॥**

सिद्धानामसिद्धानां शब्दानामर्थप्रत्यायनाऽभेदे पि-अर्थ-प्रत्यायकत्वस्य समानेपि तथा च- महर्षिः श्रीपतञ्जलिरचलनाथः—समानायामर्थावगतौ शब्दैश्चाप शब्दैश्च शास्त्रेण धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देन-एवं क्रियमाणमभ्युदयकारिभवतीति "शिष्टेभ्यो लब्धात्, आगमाद् व्याकरणात् सिद्धाः सिद्धिं गमिताः धर्मसाधनत्वेन बोधिताः साधवः शब्दाधर्मसाधनम्। विपरीता असाधवः—अनिष्टसाधनत्वेन बोधिता ज्ञापिता असाधवोऽधर्म-

साधनम् । साध्वपभ्रंशयोरुभयोरर्थबोधकतायास्तुल्यत्वेऽपि संस्कृत शब्दप्रयोगेधर्मोऽपभ्रंशासंस्कृतशब्दप्रयोगेनेतिव्यवस्थाशिष्टानांपरम्परा व्यवहारदर्शनेनमन्वादिवत् तथा चाह योगिकुलभूषणो योगिराजो योगी मङ्गलनाथः विचारविन्दुग्रन्थे—यतो नैष सतांमार्गो यत्र वेद व्यतिक्रमः । विस्पष्टोऽतः सदा त्याज्यः शिष्टाग्राह्यमताग्रहः ॥७६॥ अतएव शिष्टा आगमाग्राह्याः । "इको यणचि" अकः सवर्णोदीर्घः" इत्यादिभिः स्वविधेयघटिते साधुत्वं तदितरस्मिन् स्वोत्तरशास्त्रा-बोधितेऽसाधुत्वं च बोध्यते । अन्यथा 'सुपसुपा' इत्यादिसमासविधा-यकशास्त्रेण सुधी-उपास्यः 'दधि-अत्र इत्यादीनामपि साधुत्वं बाध-नात् । एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीतिश्रुत्या सिद्धानांधर्मसाधनत्वस्य "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै नाप-भाषितवैम्लेच्छोहवा एष यदपशब्दः" इतिश्रुत्या, असाधूनामधर्म साधनत्वस्य बोधनात्, योगिदृष्टागमसिद्धेर्थे मा विवदेलिमम् । एतेन "अहिंसा परमोधर्मः" इत्यादीनि भगवद्बुद्धवचनान्यपि समा-दर्त्तव्यानि ॥२७॥

**नित्यत्वे कृतकत्वे वा तेषामादि र्न विद्यते ।**
**प्राणिनामिव सा चैषा व्यवस्था नित्यतोच्यते ॥२८॥**

तेषां शब्दानां नित्यत्वेऽविनाशित्वे कृतकत्वे कार्यत्त्वे नित्यत्वेवा आदिर्न, आरम्भोनास्तीत्यर्थः । प्राणिनामिव जीवानामिव सैषा व्यवस्था नित्यता व्यवहारनित्यता, उच्यते कथ्यते । यथा लोकाना मुत्पन्नविनाशयोर्दृष्टत्वेऽपि प्रत्यक्षतया किन्तु नास्ति तेषां विनाशः तत्रापि नाम्नो यद्वा नाम्नि एव विनाशो नतु तदाश्रयस्य । देवदत्तस्य मरणवेलायामन्ये तथैवजीवन्ति, तथा च-देवदत्ते मृते ग्रामे म्रियन्ते न नराः परे । एवं ब्रह्माण्डसंख्याश्च विनश्यन्त्यु द्भवन्ति हि ॥ अत एव-

२

शब्दाना मनादित्वेन प्रवाहनित्यता सोढव्या । अत एव उत्पन्ने विद्यमाने विनष्टे संजनिष्यमाणे गकारे गत्वप्रयुक्तप्रकारताप्रातिपथिकता मावहन्ती सध्रीचीनैवा येहि वैशेषिकादय आत्मनां नित्यत्वमातिष्ठन्ते तेषां कूटस्थनित्यतया च लौकायतिका आत्मनां देहेन्द्रियरूपतां स्वीकुर्वाणा अनित्यत्वंसंगिरन्ते तेषामनादौ संसारप्रवाहेऽप्रवृत्तप्राणिव्यवहारस्य कालस्याविद्यमानात् प्रवाहनित्यतया शब्दनित्यत्ववादे कूटस्थनित्यतया तेषामादिः, इयं प्रथमता न । तदुक्तं भाष्ये—"तदपि नित्यं यमिंस्तत्त्वं न विहन्यते" यस्मिन् विहतेऽपि—आश्रयप्रवाहाविच्छेदात्तद्वृत्तिधर्मो न विहन्यते केनापीत्यर्थः ॥२८॥

**नानर्थिकामिमां कश्चिद् व्यवस्थां कर्तुमर्हति ।**
**तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः॥२९॥**

कश्चिन्मन्दबुद्धिः पुमानपि, अनर्थिकां निष्प्रयोजनामर्थशून्यामिमां पुरोवर्तिनीं साधुत्वविषयिकां दुर्ज्ञेयां दुर्बोधां दुरध्येयां च व्यवस्थां कर्त्तुं नार्हति । प्रयोजनमनुद्दिश्य न मन्दोऽपिप्रवर्तते,, इति न्यायान्मुग्धधियोऽपि निष्प्रयोजने कर्मणि प्रवृत्त्यदर्शनेन पाणिन्यादेः प्रवृत्तेः सुतरामसंभवादिति पाणिन्यादेः साग्रहं साधुत्वविषयकव्यवस्थायां प्रवृत्तिदर्शनात् तस्याः सप्रयोजनत्वमर्थादापनीपद्यते । शिष्टैः पाणिन्यादिभिः साधुत्वविषया स्मृतिः, व्याकरणशास्त्रं निबध्यतेऽनेकसूत्रसमुदायेन नियंम्यते । तथा च-हरे-ए । हरे-आगच्छ । हरे-अव । इत्यादि प्रयोगाणां साधुता ना वैयाकरणेनकर्त्तुं शक्या । अत एव-अयं साधुरयमसाधुरिति नियमो धर्माधर्मनिबन्धकतया, अर्थवत्त्वेन कर्तव्यत्वात्, नायोगिनो नरः शकलोनिबद्धुं पारयन्ति ॥२९॥

**न चागमादृतेधर्मस्तर्केण व्यवतिष्ठते ।**
**ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥३०॥**

धर्मो यागतपःसत्यदानाहिंसादिसमुदायः । आगमाद् ऋते, आगमानपेक्षेण युतर्केण क्त्याऽनुमानादिना न व्यवितिष्ठते, "समवप्रविभ्यः स्थः" इत्यात्मने पदम् । न व्यवस्थां प्राप्नोतीत्यर्थः । शास्त्रादेवधर्माधर्मयो निर्णयः कार्यः सुधीभि रिति । शङ्खनरकपालमृगाजिनव्याघ्रचर्ममहिचपर्मरासभचर्मगजचर्मादीनां तत्त्वेन समानतया परंतु शास्त्रेण, अन्यतमस्येव निर्णयः प्रदीयते न सर्वेषाम् । अत एवऋषीणा मपि वेदादिद्रष्टणामपि यज्ज्ञानं तदपि-आगमपूर्वकं शास्त्रपूर्वक मित्यर्थः—अस्तिभवतिपचतिपठतिगच्छतिव्रजतिसेधतिकरोतिवहतिस्वपितिप्रभृतीनां क्रियाणां रामदेवसूर्यचंद्र-योगयोगिवेदधर्मकर्मवर्मतीर्थाचार्यार्यादिशब्दानां विपर्य्यासोऽन्यार्थेशक्ति र्वा ऋषिभिरपि कर्त्तु न शक्यत इतिभावः । ऋषिज्ञानमप्यनुगतकल्पमहाकल्पसाक्षिकमित्यर्थः ॥३०॥

**धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।**
**नताँल्लोकप्रसिद्धत्वा त्कश्चित् तर्केण बाधते ॥३१॥**

ये धर्मस्य, अव्यवच्छिन्ना विच्छेदरहिता धाराप्रवाहगत्या समागता लोकमर्यादा व्यवस्थिता व्यवस्थां प्राप्ताः, नियता इत्यर्थ । पन्थानोमार्गा स्तांल्लोक प्रसिद्धत्वाद् हेतोः । कश्चित्तान् पथः स्वयुक्त्या तर्केण न बाधते । पशुवादि हिंसा लोकविरुद्धागर्ह्या "यजमानस्य पशून् पाहि" न हिंस्यात्सर्वा भूतानि" इत्यादि वेदवचनैर्निन्दिता सा केनापितर्केण व्यवस्थापयितुं न शक्य ते ॥३१॥

**अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।**
**भावानामनुमानेन प्रसिद्धिरति दुर्लभा ॥३२॥**

यादृशं यूनि शकलि सत्त्वं न तादृशं स्थवीयसि पुंसि । यादृशोऽनुभवः स्थवीयसः प्रवर्धते न यूनस्तादृशः । इत्यवस्थाभेदः ।

मरुस्थलेचर्मसन्नद्ध ज विदुषाऽपिपेयमन्यथा न निर्वाहः । यद् वस्तु मध्यभारते सुखकरं न तद् हिमवति, उष्णप्रदेशे यद् हितकरंनत च्छीते । ये नियमा उष्णे हितकरा न ते शीते । इत्यादि देशभेदः । वर्षतौ विद्यमानमपि वास्तूकबीजं न प्ररोहति । सहस्रयत्नेनापि श्रावणे वसंतोदयो न पौषे ग्रीष्मोदयो न । यद् वस्तु चैत्रे हानिकरं न तद् भाद्रे । इत्यादिकालभेदः । भावानां पदार्थानां पनसकटम्भरापुनर्नवा-पद्माटपद्माकाकमाचीशकुलाक्षककूष्माण्डपटोलसूरणप्रभृतीनां भिन्नासु सतीषु शक्तिषु वाच्यगुणानुवर्तिनीषु । अनुमानेनाऽनुनित्या युक्त्या वा प्रसिद्धिः तद्बोधिका स्थितिः, अतिदुर्लभातीव दुष्प्रापा । यद्वा—अवस्था स्तिस्त्रो जाग्रत्स्वप्न सुषुप्तयः । देशाभारता-दयः । कालाः, भूतभविष्यवर्तमानाख्याः । तेषांभेदाद् भावानां पाका-दिशब्दानां भिन्नासु शक्तिषु देशलकारसहचरिततत्तत्क्रियासु प्रसिद्धिः प्रयोगसिद्धिरर्थनिष्ठा वाऽनुमानेन न तर्काश्रितयुक्त्याऽतीव दुर्लभा । रथन्तरादयः प्रयोगाः । छान्दसक्रिया सन्निधानं च याभूता-र्थेक्रिया सा वर्तमाने या भविष्ये साभूते । यत्र तृतीया तत्रप्रथमार्थः । यत्र चतुर्थी तत्रषष्ठ्यर्थः इत्यादिषु नानुमानस्य गतिः किन्तु-आगमः एव शरणीकरणीयः । यद्वाधर्मशास्त्रपक्षे—मनुमा-मनोर्मा मनुमा मनुप्रमाग्राह्या । मानवं शास्त्रम्—अवस्था देशकालभेदात्प्रवर्तते । लासातिव्वतहिमप्रदेशे—स्नानधौतप्रक्षालनादिनियमा मनुप्रोक्ता न चलन्ति । इतरत्र प्रचलन्ति । अतएव भावानां तत्तद्देशीयाऽनुष्ठान विशेषाणांशक्तयोऽपिभिन्नाः । न्यायपक्षे—परापरादयः परत्वापरव-कालधर्माः, देवदत्तघटपटादीना देशकृतकालकृतभेदाः तद्गत शक्तिभेदाश्चग्राह्याः । मीमांसापक्षे—देशः स्वर्गादिः । कालिक सम्बंधेन यागादिः राजसूयचातुर्मास्यदर्शपौर्णमासाश्वमेधपुत्रेष्टि प्रभृतिसमुदायः । भावनामपूर्वाणांभिन्नासुशक्तिषु विद्यमानासु— "कर्मभेदात्सृष्टिवैचित्र्यम्" अनुमानेन ज्ञातुमशक्यम् ॥ यद्वा—देश-

कालानां देशानां कालानांमिति देशकालानांभारतामेरिकाहरिवर्पकाके-सियाजापानादि देशानां समयानां घटीपलघण्टाद्यवस्थानां भेदाद्, तत्रभावाना मन्त्रादिभावानां भिन्नासुशक्तिषुप्रसिद्धिरनुमानेन ज्ञातु मशक्या। यद्वा राजनीति पक्षे—अवस्था राजनीतिधारा देशकालानां भेदाद्भवन्ति। कचित्प्राणदण्डापराधेऽपि जाते 'न प्राणदण्डः। कचिन्मुद्रादण्डः। कचिद्दृष्टि दण्डः, कचित् च्छस्त्रादिकंत्यक्तवतोऽपि व्यापादनं कचित्सर्वथामुक्तिः। तेषां शक्तयः प्रभावा जनतायां पृथक् पृथग्भवन्ति। आयुर्वेदपक्षे—देशकालानां देशो नदीतटवनपर्वतादिः। कालः सायं प्रातरादिः। तेषामवस्थाश्रोषधिग्रहणमात्रा, यद्वा-आरोग्याद्यावस्था यद्वाभूमिजलभेदादोषधीप्रभृतीमनगुणाः। तत्र भिन्नासुशक्तिषु विद्यमानासु प्रसिद्धिः प्रभावः बोद्धमशक्योऽनुमानेन गायनपक्षे—देशकालभेदाद्—वैचित्र्यंजायत एव, भेदास्ताललयमूर्च्छनाग्रामारोहावरोह स्वरादयो ग्राह्याः। तत्र भावानां परिमार्जितमनोगम्यत्वान्नास्ति साधारणस्य शक्तिः। तत्रापिभिभिन्नासु शक्तिषु सतीषु प्रसिद्धिः काऽप्यनिर्वचनीया सिद्धिः अनुमानेन बोद्धुमशक्यत्वात्। योगपक्षे-देशोधार्मिकः कालप्रातरादिः—यद्वा "यानिशा सर्वभूतानां तस्यां जागर्ति संयमी" त्यादि। यद्वाकालःवर्षादिक्रमः—तदुक्तं भगवतागोरक्षनाथेन-सिद्धसिद्धान्तपद्धतौ—प्रथमेत्वरोगतासिद्धिः सर्व—लोक प्रियोभवेत्। काक्षन्ते दर्शनं तस्य स्वात्मारूढस्यनित्यशः। द्वितीये वत्सरे काव्यं कुरुते तत्त्वभाषया। तृतीये दिव्य देहस्तु व्यालै र्व्याघ्रै र्न बाध्यते। चतुर्थेक्षुत्तृषानिद्रा शीतातपविवर्जितः। जायते दिव्ययोगीशो दूरश्रावीन संशयः" ॥ इत्यादि बहुप्रादर्शि। अवस्थापदेन भूमिकाद्याः सप्तग्राह्याःतत्रभावानामणिमादिसिद्धिनां भिन्नासुशक्तिषु विद्यमानासु प्रसिद्धिः प्रत्यक्षावस्थाऽनुमानेन बोध्दं मशक्यत्वात्—दुर्लभा सहजावस्था सद्गुरोः करुणां विना। अहो धन्यस्तवमवान्भर्तृहरिर्धन्योऽसौभगवान् गोरक्षनाथ आदि-

नाथः । यदीयविनेयस्यभर्तृहरेर्वाक्यपदीयस्यग्रंथस्यार्था बोध्दुं न शक्यन्तेसंख्यावद्भिरपि । कारिकास्था अन्येपक्षाःस्वयमूहनीयाः कोविदैः ॥ ३२ ॥

**निर्ज्ञातशक्तेर्द्रव्यस्य तांतामर्थक्रियाम्प्रति ।**
**विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ॥३३॥**

निर्ज्ञातशक्तेः निर्ज्ञाता निश्चिता दृष्टा शक्तिःदाहकता यस्य तस्याग्नेः द्रव्यस्य तांतामर्थाक्रियां प्रति दहनादिक्रियांप्रति विशिष्ट द्रव्यसंबंधे वलाहकपटल हिमानीचंद्रकांतादिप्रतिबंधकद्रव्यसन्निधाने सा दाहकताऽग्नेः शक्तिः प्रतिबध्यते अतः शक्तिप्रतिबन्धेनानुमानस्य व्यभिचारान्न सामर्थ्यमितिभावः। सा शक्तिरनुमातुमशक्या, मुष्टिकायां पिहितायां किमस्तीति प्रश्नतुल्यावार्ता ॥ ३३ ॥

**यत्नेनानुमितोप्यर्थः कुशलैरनुमातृभिः ।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥३४॥**

यतः; यथा केनचिद् विदुषा "शब्दोद्रव्यम्-अव्यवहितसंबंध-ग्राह्यत्वाद् घटवत्" इत्यनुमित्या शब्देद्रव्यत्वे साधिते परेण शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वाद्, रूपादिवत्, इत्यनुमित्याशब्दे द्रव्यत्वाभावः साध्यते। अपरमपि घटो मिथ्या दण्डानाशित्वात् मृत्पिण्डवत् ॥ द्वितीयो घटः सत्यो मृदवयवनिष्ठत्वात् तन्त्ववयवपटवत्, मृद एव घटोत्पत्तिर्नभ्रक्षणात्। अतः केवले तर्के विस्रम्भो माविधेलिमः। यतः कुशलै रनु मातृभिः कपिलादिभिर्यत्नेनानुमितोऽपि जगतः कारणं प्रधानं हीत्येवंरूपोऽर्थः, अन्यै रभियुक्ततरैः कणादादिभिरन्यथा परमाणुः जगतः कारणमित्येवं रूपेण, उपपाद्यते व्यवस्थाप्यते, एवं तदन्यैरन्यथा-यथा पर्वतोऽग्निमान् प्रमेयत्वात् विरुध्दे पर्वतोऽग्निमान् धूमात्।

सर्वमनित्यं प्रमेयत्वात् । विरुध्दे सर्वं नित्यं प्रवाहदर्शना यद्वा सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति । शब्दोऽनित्यः कार्यत्वाद् घटवत् । विरुद्धे शब्दोनित्यः सर्वप्रत्यायकत्वात् । आकाश कमलं सुरभि कमलत्वात् सरोजारविन्दवत् । विरुध्दे—आकाशकमलं न सुरभि-आश्रयासिद्धेः । एवं नास्तितर्काणां प्रतिष्ठा । अतएव-केनापि आकस्मिकवादः केनापि—असत्कार्यवादः केनापिसत्कार्यवादः केनापि सदसत्कार्यवादः केनापि अनिर्वचनीयवादः केनापि चतुष्कोटि विनिर्मुक्तवादः केनापि स्वभाववादः केनापिहेतुवादः । अपरेणाभूतिवादः परेणस्वतः—उत्पादवादः । इतरेणानुपाख्योत्पादवादः । तदन्येन यदृच्छावादः । तदपरेणापरवादः । इत्यादिस्तर्कोनिरवधिर्नास्ति तर्केण निर्णीतोर्त्थः ॥३४॥

**परेषामसमाख्येयमभ्यासादेव जायते ।**
**मणिरूप्यादिविज्ञानंतद्विदां नानुमानिकम् ॥३५॥**

परेषां पुरस्तादसमाख्येयं मणिरूप्यादि विज्ञानं तद्विदा मभ्यासादेव जायते । नानुमानिकम् । परेभ्योवक्तुमशक्यं मणिरूप्यादितारतम्यज्ञानं मणिरूप्यादिविदां नृणामपरमणिपरिचेतृवचनपूर्वका जायते । व्याप्तिज्ञानाजन्यत्वात्तन्नानुमानिकम् । अभ्यासरहितैः पटुभिरिन्द्रियैरपि तदधिगन्तुमशक्यतया न प्रत्यक्षम् । इन्द्रिय मात्राजन्यत्वात् । लौकिकप्रत्यक्षानुमानातिरिक्तंकिञ्चिल्लौकिक समाधिजन्यं भावनापरपर्य्यायमभ्यासाख्यं प्रमाणान्तरमधिगमेलिमम् । एतेन प्रत्यक्षानुमाने एव प्रमाणे ते व्यभिचारयितुं यद्वातर्कस्या व्यवस्थितत्वेन धर्माधर्मप्रमापकत्वाद् योगात् । स्फुटो भवति । अन्यान् जनान् प्रति मणि रूप्यादि विज्ञानमसमाख्येय मवाच्यंयतो हि परीक्षकाणामभ्यासादेवजायते वारं वारम् । पचेलिमरागिणो यथारागः साधारणेन बोद्धु मशक्यतया विदा एव बुध्यते । एवं योगिजनानुभव-

जबोधो नानुमानिकः । अतएवऋषयोऽपि योगजधर्मेणैवातीन्द्रियाणां द्रष्टारोभवन्ति ॥३५॥॥

**प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः ।**
**पितृरक्षः पिशाचानां कर्मजा एव सिद्धयः ॥३६॥**

अयं भावः सत्यपि कुड्यादिव्यवधानेऽन्तर्गृहस्थितवस्तूनि रक्षः पिशाचादयः पश्यन्ति । अत्र न प्रत्यक्षं नाप्यनुमानम् । उभे व्यतिक्रम्य कर्मजा अदृष्टविशेषजातेषांयद्वायोगजाःसिद्धयः । अनडुहामपि सनामपुरुषपरिचितिः । सारमेयादिसंख्याज्ञानं मुखंपिधाय सप्तावरणवाससा वस्तु परिचयदानं पुरुषेणक्रियमाणं परिदर्शनात् । एवमृषीणामपि ज्ञानं तपः साध्यादृष्टजन्यं प्रत्यक्षानुमानजन्यं न ॥३६॥

**आविर्भूतप्रकाशानो मनुपप्लुतचेतसाम् ।**
**अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥३७॥**

ननु योगजं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वात् । व्याप्तिज्ञानाजन्यत्वान्नानुमानिकम् । सादृश्यज्ञानाजन्यत्वान्नौपमानिकम् । शब्दज्ञानाजन्यत्वान्नागमिकम् । उपपाद्योपपादकाभावान्नार्थापत्तिजं चेष्टाभावान्नचैष्टिकम् । इतिहासाभावान्नैतिहासिकम् । तर्हि किंतदित्याह—न-उपप्लुतानिर जस्तमोभि-समाक्रान्तानि चेतांसियेषां तेषा मनुपप्लुतचेतसाम् । शुद्धाशयानां तपसाक्षीणकल्मषाणाम् । अत एव—आविर्भूत-प्रकाशानां निरावरणचैतन्यानाम् । यमिनां यद्—अतीतानागतज्ञानम् । भूतं भविष्यद् ज्ञानं जायते तज्ज्ञानं तेषां प्रत्यक्षान्न विशिष्यते विशिष्टंन भवति नभिद्यते विलक्षणं न भवतीतियावत् । सूक्ष्मासूक्ष्म-व्यवहिताव्यवहितादीनामपिग्रहणंध्येयम् । प्रत्यक्षरूपमेवभवति । अलौकिक सन्निकर्षयोगजधर्मेण जन्यत्वात् । यथा लोकः स्वयं मुखं निभालयन्नपि स्वच्छदर्पणे प्रतिबिम्बरूपेण विलोकयति तद्वद् योगिनो

स्मदादिभिरग्राह्यमपि वस्तु जातमव्यभिचरितं निरीक्षंतेक्षीण-कल्मषाः ॥३७॥

**अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।**
**ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥३८॥**

आर्षं ज्ञानं मिथ्या, इंद्रियसंबद्धविषयकत्वेसति प्रत्यक्षत्वात् स्तम्भ पुरुषवद्-इत्याद्यनुमानेन बाधो माभूदित्याशङ्क्याहयोगिराजः, इन्द्रियाणि-अतिक्राता इत्यतीन्द्रिया स्तान्-अतीन्द्रियान् इंद्रियै रविषयान् अतएवासंवेद्यान् अनुमानादिभि रप्याग्राह्यान् भावान् पदार्थान् ये मुनय आर्षेण व्यावहारिकादन्येन अलौकिक प्रज्ञोपलब्धेन चक्षुषा चक्षुः सदृशेन योगजधर्मेण पश्यंन्ति तेषां वचनं लौकिकानुमानेन न बाध्यते । लौकिक प्रत्यक्षे विषयेन्द्रियसम्बंधस्य हेतुत्वेऽपि योगजप्रत्यक्षेतस्याकारणत्वेनातस्तत्र न बाधः ॥३८॥

**यो यस्य स्वमिव ज्ञानंदर्शनंनाभिशङ्कते ।**
**स्थितं प्रत्यक्षपक्षे तं कथमन्योविवर्तयेत् ॥३९॥**

यः कलशाध्यक्षीकृतवान्ना । यस्यान्यजनस्य देवदत्तादेः ज्ञानं दर्शनं सत्यं घटपटादिविषयकम् । स्वमिव स्वकीय ज्ञानतुल्यं नाभिशङ्कते न रेकते न शङ्कां कुरुत इतियावत् । सत्यमेव देवदत्तस्यापि ज्ञानं मनु ते इतिभावः । यथा मदीयं गोरक्षपुरे श्रीरामस्थापितगोरक्ष-मन्दिरे भगवद् गोरक्षनाथदर्शनं सत्यं तथैवान्यस्यापिभवेदितिनिश्चिनुते । तं प्रत्यक्षपक्षेस्थितं पुमांसम् । स्वयं प्रत्यक्षी कृतवन्तं पुरुषम । अन्यः केवलतार्किकः स्वयं साक्षात्कारविहीनः । कथं विवर्त्तयेत्प्रामाण्याभावमापादयेत् । अपितु नेति, अयं भावो गोरक्ष–ताम्बूल-गोरक्षमुण्डीगोरक्षकर्कटीशर्करासिताद्राक्षासंयावस्तोत्रादिवस्तूना मनुभविता जनः, इतरजनेनशर्करामधुरेति नवाकथिते न शङ्कते । यस्तु

ना तदनभिज्ञो मधुरा नवा सितेति शङ्कते। तस्य शङ्कया न माधुर्यस्य बाधः। स्वानुभूतस्य बाधो न केनापि कर्त्तुं शक्यः। एवमेवातीतानागतविषयकयोगीश्वरार्षप्रत्यक्षस्य न तर्केण बाधः समाधिमाधाय स्वयमेवानुभूयतामिति, एतेन धारणां विना शुष्कवेदांतिनां निरासोपिज्ञेयः॥ ३९॥

**इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये।**
**आचाण्डालमनुष्याणां समं शास्त्रप्रयोजनम्॥४०॥**

चण्डालम्—अभिव्याप्य। इत्याचण्डालम्—आन्त्यजं मनुष्याणां नतु पशूनां तेषां पार्श्वेऽध्ययनसाधनाभावः। अयं धर्म इदं पापमित्येतस्मिन् पदद्वये बोधनद्वये समं तुल्यरूपं शास्त्रप्रयोजनं शासनाच्छात्रमित्याहुः शास्त्रपदेन मानवोपकारकत्वेन वेदादिग्रंन्था गृह्यन्ते प्रयोजनमावश्यकम्। अतोऽनुमित्याधर्माधर्मयो निर्णयाभावात्तन्निर्णयाय शास्त्रं मनुष्यमात्रमधिकृत्यावश्यकम्। "ब्राह्मणेनषडंगो वेदोऽध्येयो ज्ञेयश्च" इत्युक्तेः। अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत इत्युक्तेश्च। अत्र ब्राह्मणपदं जातिपरं यद्वाधर्मपरं प्रज्ञांकुर्वीत-ब्राह्मणः, ब्राह्मणस्य विजानतः। इत्यादिवत्। तेनब्राह्मणजातीयानां पुंसामिव स्त्रीणामपि तज्जातीयानां तदध्ययनमध्यापनं च भवति। अतएव "अथय इच्छेद् दुहिता मे पंडिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मंत मश्नीयातामीश्वरौ जनयितवै" इतिबृहदारण्यकश्रुतौ तथा गार्गीमैत्रेयीभ्यांश्रुत्यध्ययनस्य तदर्थावगमस्य च तत्रैव, महाराजाधिराजजनकेन तथान्यपण्डितैः सह वादकथायाश्चश्रवणाद् वेदविषयिण्याः। "तथा गार्गीच मैत्रेयीतत्र तीर्थेमहत्तरे। वेदतीर्थाभिधेस्नानं कृत्वा पर्वणि केशव!" स्कान्दे-सूतसंहितायाम्. "कन्या सती देवमर्कमाजुहाव यशस्विनी" इति

महाभारते आदिपर्वणि सप्तषष्टितमेऽध्याये, स्त्रीणां प्रव्रजितानां तु करशुल्कैर्विवर्जयेद्" इत्याग्नेये । विद्वज्जनवन्दिता सीता प्राह-विपुल हृदयैकवेद्ये खिद्यति शास्त्रे जडो न मौख्यैः स्वे। निन्दति कन्चुकीकारं प्रायः शुष्कस्तनी नारी इत्यादिश्लोक प्रबन्धादौ "शतपथीकी" काशकृत्स्ना "उपाध्याया" आचार्याणी "उपाध्यायानी, उपाध्यायी" यातु स्वयमेवाध्यापिका तत्रवा-ङीप् वाच्यः उपाध्यायी; उपाध्याया, अध्ययनं विनास्त्रीणामध्यापन मयुक्तम् । उपेत्ययस्या अधीयते इत्युपाध्याया । आकृतिग्रहणा-जातिर्लिगानांच न सर्वभाक् । सकृदाख्यातनिर्ग्राह्यागोत्रं च चरणैः सह ।। इत्यत्र–अपत्यप्रत्ययान्तः शाखाध्येतृवाची । चशब्दो जातिका-र्यं लभत इत्यर्थः । औपगवी, कठी, व ह्वृची । इत्यादि दर्शनात् । पुनश्च–पत्युर्नोयज्ञसंयोगे ।४।१।३३। इत्यत्र पतिशब्दस्यनकारा देशः स्याद्यज्ञे न सम्बन्धे वसिष्ठस्य पत्नी तत्कर्तृकयज्ञस्य फलभोक्त्री-त्यर्थः । दम्पत्योः सहाधिकारात् । जीवतोरितिशेषः । एकस्मि न्नेवयज्ञे स्वामित्वेनाधिकारः । भार्याविरहे-कण्वभीष्मादीनामिव केवलानांपुंसा मप्यधिकारः । पतिविरहे केवलस्त्रिया अपीति । पति शब्दोऽयमैश्वर्य वाचीसर्वेणगृहस्थेन प्रत्यहं पञ्च महायज्ञा निर्वर्त्याः । प्रागुक्तरीत्या नानृतंवदेत्' इति निषेधस्य सर्वसाधारणत्वाच्च, द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्योवध्वश्च । तत्र ब्रह्मवेदं वदितुं शीलं यासां ता ब्रह्मवादिन्यः । तत्र ब्रह्मवादिनीना मुपनयनमग्नीन्धनं वेदाध्ययनं स्व-गृहेभिक्षाचर्येति सद्योवधूनामुपस्थिते विवाहे कथंचि दुपनयन मात्रं कृत्वोद्वाहः कार्यः । आचण्डालपदेन मनुष्य मात्रस्यशास्त्राधिकारः साधितो भवति ।।४०।।

**चैतन्यमिव य श्च मविच्छेदेन वर्तते ।**
**आगमस्तमुपासीनो हेतुवादै र्न बाध्यते ।।४१।।**

यश्चायमागमोऽविच्छेदेन विच्छेद रहिततेनप्रवाहकूटेन चैतन्यमिव चेतन आत्मेव वर्तते । तमागमं वेदादिशास्त्रमुपासीनःपुमान् हेतुवादै स्तर्कैर्नबाध्यते । अयमर्थः । अविच्छेदेन स्वतः, स्वप्रकाशतया वर्तमानं चैतन्यमिव यश्चायं योगश्रुतिलक्षण आगमः, अविच्छेदेन विच्छेदोऽप्रामाण्य मविच्छेदः प्रामाण्यं तेन स्वतः प्रमाणतया वर्तते । तं स्वतः प्रमाणमागम मुपासीनः । आगमाज्ञयाप्रवर्तमानो मानवो हेतुवादैस्तार्किकवादै र्न बाध्यते, तदुक्त मनेनैवभर्तृहरिणाराजर्षिणा स्वशतके—न्याय्यात्पथः प्रविचलन्ति पदं नधीरा इति न्यायेन नविचाल्यते । यथा विज्ञानेजाते कश्चिदपि ना जानामि नवेति न संदिग्धे नजानामि इति वा न विपर्यासं भजते । अतोविज्ञानं स्व प्रकाशं स्वीक्रियते सिध्दैः । एव मागमेऽपि कश्चिदपि—आगमः प्रमाणं न वेति न संदिहानो जायते, न प्रमाणमिति न विपर्यस्यति । अत आगमः स्वतः प्रमाणं भजते, नागमप्रामाण्यायतर्कादिकमपेक्ष्यते । तस्मात्तर्काबाध्य आगमः । किन्त्वेतावतापि परमात्मप्रकाशसापेक्ष आगमः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, इत्यादि बहूक्तम् । अन्यथाऽन्योन्याश्रयादिदोषा निर्बाधाअगाधाः प्रवर्तेरन् ॥४१॥

**हस्तस्पर्शादिवान्धेन विषमे पथि धावता ।**
**अनुमानप्रधानेन विनिपातो न दुर्लभः ॥४२॥**

विषमे दुर्गमे पथि पर्वतमार्गे चक्षुष्मन्तं नेतारमन्तरेण हस्तस्पर्शात्किंचिन्मार्गैकदेशं हस्तस्पर्शेनावगम्य तत्प्रत्ययादपरमपिमार्गैकदेशं धावता क्षिप्रगत्या गच्छता अन्धेन इव विषमे प्रत्यक्षानुमानाभ्यां दुर्बोधे पथि दृष्टादृष्टफले कर्मणि, आगमं नेतारं विना, एकदेशं केवलेनानुमानेनाववुध्यैकदेशान्तरमपि पूर्वप्रत्ययात्त्वरया धावता, आगममनपेक्ष्य प्रवर्तमानेन, अनुमानं प्रधानं यस्य तेन, अनुमानप्रधानेन

विनिपातः पतनम्—इतरत्र कण्वं न दुर्लभः, अवश्यंभावीत्यर्थः। एकत्र चक्षुःशून्येन परत्रागम शून्येनेति निष्कर्षः। एकत्र शैलारण्यादि मार्गे, अन्यत्र दुर्बोधधर्मादिमार्गे, एकत्रपरीप्सया व्रजताऽन्यत्रानुतिष्ठतेतिसर्वत्रोभयपक्षेऽनुसन्धेयम्। शुष्कज्ञानमार्गेणवेदान्तादिनापातो न तथा योगमार्गेणेतिध्वनिः ॥४२॥

**तस्मादकृतकं शास्त्रं स्मृतिं च सनिबन्धनाम्।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ॥४३॥**

तस्मात्, पूर्वोक्तहेतोः। अकृतकम्, अनादिपरम्पराद्वारासमागतं शास्त्रं शास्यतेऽनेनेति व्युत्पत्या। तर्कस्याव्यवस्थितत्वेन, आर्षबोधस्यागममूलकत्वेन, धर्माधर्मयोरागमबोध्यत्वात्कृतकारिताशून्यत्वात् अकृतकं न कृतकमिति यावत्। पुरुषहितोपदेशाय प्रवृत्तमपौरुषेयं शास्त्रम्। निबध्यतेऽनेननेति निबन्धनं मूलम्। निबन्धनेन मूलेन सहितां सनिबन्धनाम्। शिष्टोपदिष्टपराम्पराप्रभावानुभाविताम्। स्मृतिं च, आश्रित्य प्रमाणीकृत्य द्वारीकृत्येतियावत्। शिष्टैः पाणिन्यादिभिराप्तैः। शब्दानुशासनं शब्दानुशिष्टिरारभ्यते। अयंकूटः— शब्दानुशिष्टिमारभमाणाः पाणिन्यादयोऽनादिकालप्रवृत्तं व्याकरणागममुपजीव्यैव कारणीकृत्यैव जनकीकृत्यैवेतियावत्। आरभन्ते शब्दानुशासनम्। अतएव—शाकल्यस्य शाकटायनस्य गालवस्य गार्ग्यस्य स्फोटायनस्येत्यादिनिर्देशेन पूर्वागमस्मर्तॄन् स्मरन्ति। तेऽपि स्वपूर्वान् स्मर्तॄन् स्मरन्ति। ततोऽन्ये स्वपूर्वान् स्मर्तॄन् स्मरन्ति। ततोऽपरे स्वपूर्वान् स्मर्तॄन् स्मरन्ति, तदितरे स्वपूर्वान् स्मर्तॄन् स्मरन्ति। तस्मादनादिदीर्घकालात्प्रवृत्तोयं व्याकरणागमः। मुखं व्याकरणं स्मृतं सर्वशास्त्राणामिति पाणिनिशिक्षा। तस्मात्सर्वेस्मर्तारः न कर्त्तारः कर्तृत्वं साधुत्वासाधुत्वविषयप्रविभागविस्तार एव नतु नूतनाकृतिः ॥४३॥

द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।
एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥४४॥

उपादानशब्देषु वाचकशब्देषु शब्दविदो वैयाकरणाद्वौशब्दौ वाचकौ विदुर्जानन्ति, एकः श्रोत्रग्राह्यवैखरीवाग्रूपः । शब्दानां स्फोटरूपाणां निमित्तं प्रकाशकारणम् । तेन वैखरीरूपेण हि स्फोटः प्रकाश्यते शब्देन । अपरः स्फोटरूपः शब्दः अर्थे प्रयुज्यते प्रयुक्तो भवति । अर्थज्ञापनक्षमोऽभिचाकशीति । वैखरीवागात्मकशब्दो न साक्षादर्थं बोधयति, किन्तु मध्यमावाग्रूपः स्फोटः साक्षादर्थं बोधयतीति वैयाकरणसिद्धान्तो रारजीति । शब्द एवार्थरूपेण विपरिणमते । अर्थ एव शब्दरूपेण विपरिणमते, इति भावः । यद्वा—उपादानशब्देषु कारण शब्देषु शब्दविदो द्वौ शब्दौ विदुः । एको निमित्तं निमित्तीभूतः शब्दो यथा डित्थादिः, डित्थादिशब्दे अर्थो नास्ति, संज्ञिपरिचायकत्वमात्र मेव यद्वाकस्यापि निर्धनस्य पुंसो लक्षपतिरिति संज्ञाप्रकल्पिता न सा तस्य लक्षपतित्वस्य ज्ञापिका तत्र तु निमित्तमात्रं भवसव्यसाचिन्निति न्यायेन बोध्या । अपरः—शब्दोऽर्थे प्रयुज्यते—यथाऽयं सिद्धोऽणिमादीनां वेत्ता. अर्थे सिद्धशब्दोऽर्थे प्रयुक्तो वर्तते । अणिमादिज्ञातारं प्रत्येव प्रशोभते । यद्वा—उपादानशब्दा नभोयान वायुमान प्रभृतयः । तेषु प्लेनादिशब्दाः कल्पिताः अवयवार्थशून्या डित्थादिवत् । जवनो महीताशब्दोऽर्थे प्रयुज्यते । यद्वा—उपादीयते ऽपनुद्यते रोगोऽनेनेति—उपादानं चिकित्साशास्त्रं दापः प्रत्ययो ल्युट् । उपादानेषु चिकित्साशास्त्रेषु—शब्दविदो नाडीकर्णश्वासोदरशब्दविदो वैद्या द्वौशब्दौ विदुर्जानन्ति, कौशब्दौ साध्यासाध्यौ, अयं रोगिणः शब्दोऽसाध्योऽयं साध्यः । एष उल्लाघतां नेतुं शक्यते एष न । थर्मामेटरादयः शब्दा निमित्तीभूताः । ज्वरज्ञापकवातमापकविकृतिबोधकयंत्रादयः शब्दा अर्थे प्रयुज्यन्ते । यद्वा चतुर्णां

तत्त्वाना मुपादानमाकाशं तस्य शब्देषु उपादानशब्देषु आकाश-शब्देषु शब्दविद आकाशनिष्ठानेककल्पवर्तिशब्दविदः । यन्त्रैरध्यात्मविद्यया योगविद्यया वा । द्वौ शब्दौ विदुः । एकः शब्दो निमि कारणीभूतउत्तरोत्तरशब्दानाम् । यद्वा विस्फोटकादिशब्दो यस्यार्थो न ज्ञायते सः । अपरः लौकिको वैदिको वाऽर्थे प्रयुज्यते यन्त्रादिनागृहीत्वा सर्वसौकर्याय सर्वत्र प्रयुज्यते लौकिकैः शरीरे । पाददुःखपीडेव-शब्द संचारोऽपि सर्वत्राकासे व्यामो भवति ।।४४।।

**आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।**
**बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते ।।४५।।**

केचित्पुराणगाः पूर्वे स्मर्तारः तयोर्वैखरीवाक्स्फोटयोः । आत्म-भेदः स्वभावभेदः, अस्तीत्याहुः कार्यकारणभेदपक्षे संगच्छत इदम् । एके कार्यकारणयोर भेदवादिनः, अभिन्नस्यै वैकस्य शब्दस्य बुद्धि-भेदाद्भेदं प्रचक्षते नानात्वं कथयन्ति । वैखरीवाक् श्रोत्रग्राह्या । स्फोटोमनोग्राह्यः । वास्तविकस्त्वभेद एव न स्वतोभेद इतिभावः ।।४५।।

**अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।**
**त द्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ।।४६।।**

अरणिकाष्ठ मध्यवर्ति ज्योतिर्यथा प्रकाशान्तरकारणं भवति । तद्वद्बुद्धिस्थोऽन्तः करणस्थः शब्दोऽपि स्फोटरूपः संस्कारावस्थापन्नः शब्दोपि श्रुतीनां श्रवणानां वैखरीमातृकादिवाचां पृथक्-पृथक कारणम् ।।४६।।

**वितर्कितः पुरा बुद्धया क्वचिदर्थे निवेशितः ।**
**कारणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते ।।४७।।**

पुरा, उच्चारणात्प्राक्, बुद्धयाऽन्तःकरणवृत्त्या, योऽयं शब्दः सो

ऽर्थः, योऽर्थः स शब्दः । इत्याद्यात्मकधिया वितर्कितोविशिष्टेन निश्चितः । घटत्ववद्विशेष्यकां घट एव न पटः । क्वचिदर्थे—अर्थ बोधनेच्छयाप्रयुक्तः । कारणेभ्यः—कण्ठतालुशिरोनासिकाजिह्वामूलादिभ्यो विवृतेन विस्फारतां गतेन जातेनेत्यर्थः, ध्वनिना कत्वखत्वोदात्तत्वादिधर्माश्रयेण स स्फोटः. अर्थबोधने उपक्रियत इत्यर्थः । यादृश धर्मवान् ध्वनिस्तादृशधर्मवान् शब्दः, पूर्वगृहीतसंकेतानुकूलाएवबोधः । योगश्चित्तवृत्तिनिरोधः, योगदर्शने, येन द्वारेणगन्तव्यं ब्रह्मद्वारमनामयं मुखेनाच्छाद्य तद्वारं प्रसुप्तापरमेश्वरीत्यादि गोरक्षपद्धतौ, अथातो धर्म जिज्ञासाः इत्यादि मीमांसाशास्त्रे अथातो ब्रह्मजिज्ञासा, इत्यादि वेदान्त दर्शने, ओमित्येकाक्षरं ब्रह्मेत्यादि गीताशास्त्रे, आदिनाथं नमस्कृत्येत्यादि सिद्धसिद्धान्तपद्धतौ, वृद्धिरादैचू अदेङगुणः, न पदान्ताट्टोरनाम" इत्यादिव्याकरणे, कम्बुग्रीवादिमान् घट इत्यादिलोके अमरानिर्जरा देवाः, इत्यादिकोशे, चिकित्सानास्ति निष्फला, इत्यादिचरके, योऽयं शब्दः सोऽर्थः । योऽर्थः स शब्दः । कचित्तुभेदं परिकल्प्य—अस्यार्थस्यायमेव वाचकः, अस्य वाचकस्यायमेव वाच्यः कदाचित्संकेतोऽपि—कर्मणि द्वितीया, ऊष्मा प्रगृह्य संज्ञेत्यादि बहुत्र । यद्वा कोपि पटुमनुजः पुरा पूर्वकाले बुद्धया बुद्धिद्वारा स्वधियेत्यर्थः । वितर्कितः परीक्षितः, जातपरीक्षः पुनः क्वचिदर्थे, अर्थकार्येऽर्थव्यापारे, इत्यर्थः । निवेशितः, विश्वासार्हत्वान्नियुक्तः । ततः पश्चात्कारणेभ्यो दुःसाध्यकार्यसम्पादनेभ्यो हेतुभ्यो विवृतेन प्रसिद्धिंगतेन ध्वनिनासः परीक्षितः पुमान् सर्वैर्लोकैरनुगृह्यतेऽनुगृहीतो भवति । सत्यात्मा विश्वासी सर्वै राद्रियते, इतिभावः । इत्थ मेतादृशा विचारनाथस्य भूर्णसोभावाः ॥४७॥

**नादस्य क्रमजन्मत्वान्न पूर्वो नापरश्च सः ।**
**अक्रमः क्रमरूपेण भेदवानिव जायते ॥४८॥**

नन्वेवं स्फोटो विभिन्नः स्यादित्याशङ्क्यौपाधिकं भेदमुपपादयन् बुद्धिस्थस्य शब्दस्य स्वरूपं विद्योतयति विचारनाथः—स बुद्धिस्थः, नादाभिव्यङ्ग्यः स्फोटाख्यशब्दः, न पूर्वो नापरश्चेतिहेतोः पूर्वापरीभावरहितः, पौर्वापर्य्यव्यवहार शून्य इति यावत्। अतः—अक्रमः क्रमशून्यः। तथापि नादस्य वैखरीवाग्गीप्रणालिकया जन्म यस्य तत्त्वात्। क्रमरूपेणतत्तदर्थविशिष्टशब्दनिचयेन भेदवानिव जायते ॥४८॥

**प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात्।**

**तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः ॥४६॥**

नादत्वाविशेषादुभयत्रस्फोटोपिनादः, वैखरीवागपिनादः। बुद्धिस्थः शब्दः स्फोट उच्यते। वैखरीस्वरूपं प्राप्तः स्फोटः श्रोत्र ग्राह्यो भवति। अहं गच्छामि सक्रमः स्फोटः वैखरीरूपः। संस्काररूपोऽक्रमः स्फोटोऽपि चेतनेच्छाऽनधीनविरही। स्फोटनादयोः सधर्मः सादृश्यं नादवर्तिनं कत्वखत्वह्रस्वत्वदीर्घत्वादिकम्, अतथाभूतोऽप्यनुगच्छतीत्यर्थः। स्फोटावस्थायां कत्वगत्वा-दीनां भानं न भासते, उद्बुद्धावस्थायामेव तदाकारता। यथा सलिलस्थं निशाकरबिम्बं जलवृद्धौ एधते, नीरह्रासे ह्रसति, वारिचलने चलति वारो भेदे भिद्यते, इत्येवं धर्मानुयायि भवति नतु परमार्थतश्चन्द्रस्य तथात्वम्। एवमेकरूपमपिशब्दतत्त्वं वर्णत्वपदत्ववाक्यत्वादि धर्मान् भजत इव वैखरीरूपेण प्रतीयते नतु साक्षात् ॥४६॥

**आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते।**

**अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ॥५०॥**

यथा ज्ञाने जाते सति ज्ञेयरूपं घटादिरूपम्। आत्मरूपं ज्ञातो घटः, घटज्ञानवानहम्। तथा शब्दपक्षेऽपि शब्दे श्रुते सति, अर्थरूपं

वाच्यरूपम् । स्वरूपं च प्रकाशते चकारो घकारोत्तरवर्त्त्यकारः, अकारोत्तरवर्त्ती टकारः, टकारोत्तरवर्त्त्यकारः । एवं रूपेण प्रकाशते । ज्ञानं ज्ञेयपरतन्त्रमिति । शब्दोऽर्थ परतन्त्रः । आश्रयतयाऽऽकाशादीना मपि बोधः । घटत्ववद्विशेष्यकघटत्वप्रकारक एवबोधः । घटत्वनिष्ठ-प्रकारतानिरूपितघटत्ववन्निष्ठा विशेष्यता । शब्दानां शब्देऽर्थे च खण्डशः शक्तिः । क्वचिदर्थो विशेष्यः शब्दोविशेषणम् । क्वचिच्छब्दो विशेष्योऽर्थो विशेषणम् । अतएव राज्ञो यत्, अग्नेर्ढक्, ज्ञातो घटः, घटज्ञानवानहमित्यादि संगच्छते । अन्यथा गामुच्चारयस्पष्ट मेव वाधः ॥५०॥

**अण्डभाव-मिवापन्नो यः क्रतुः शब्दसंज्ञकः ।**
**वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ॥५१॥**

यः शब्दसंज्ञकः क्रतुर्ज्ञानात्मा, अण्डभावमापन्न इव भवति, यथाऽण्डजानामण्डः प्रागवस्थाया मवयवविहीनोपि ततः पश्चाद् विपरिणमतेऽङ्गाङ्गिभावमापद्यते । एवं—क्रतुः शब्दात्मा परमेश्वरः कण्ठताल्वादियोगेन वैखरीरूपतां भजते । तस्य क्रियारूपा, आविर्भाव-तिरोभावरूपा । वृत्तिर्व्यापारः, भागशः, भागेषु अवयवेषु क्रम भजते । एवं शब्दोपि निरवयवोऽपि श्रोतृश्रोत्रग्राह्यो भवति ॥५१॥

**यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।**
**मूर्त्त्यन्तरस्य-त्रितयमेवं शब्देऽपि दृश्यते ॥५२॥**

यथा मूर्त्त्यन्तरस्य पुरुषान्तरस्य, मूर्तिः, आकृतिः । पटे वाससि । यद्वा भित्तिकादिषु । एकबुद्धिविषया एकबोधावधेया । आक्रियते—आकारं गम्यते मूर्त्तिः । पुरुषः पटः, आकृतिः, पार्थक्येन गृहीतमपि, त्रितयं चित्रत्वेन एककालावच्छेदेनैकमेव परिगृह्यते । एवं शब्देऽपि परापश्यन्ती वैखरीरूपेण यद्वा पश्यन्ती मध्यमावैखरीरूपेण—त्रितयं

दृश्यते। यद्वा एको बुद्धिग्राह्यः शब्दः, द्वितीयो वैखरीरूपः शब्दः, तृतीयो वर्णक्रमः—घ्—अ—ट्—अ—इत्यात्मको दृश्यते ॥५२॥

**यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते।**
**व्यवसायोग्रहीतॄणामेवं तेष्वेव जायते ॥५३॥**

यथा प्रयोक्तुरुच्चारयितुः पुंसः प्राक् पूर्वं शब्देष्वेव बुद्धिः प्रवर्तते, प्रवृत्ता भवति। एवं ग्रहीतॄणां श्रोतॄणां व्यवसायः, बुद्धिः तेष्वेव शब्देष्वेव जायते। यथाप्रयोक्तार्थविजिज्ञापयिषया शब्दविशेषविषयकं—प्रयत्नं विदधानः शब्दान् स्पृशन्निव मनः प्रणिधानमुपैति। तथा श्रोतापि अर्थबुभुत्सया शब्दान् आकर्णयितुं यतमानो भवति ॥५३॥

**अर्थोपसर्जनीभूता नभिधेयेषु केषु चित्।**
**चरितार्थान् परार्थत्वान्न लोकः प्रतिपद्यते ॥५४॥**

"गामानय" इत्यादौ यथाभिधेयस्य क्रियान्वय स्तथा शब्दस्यापि स्तादत—आह—परार्थत्वात् अभिधेयान्यपरत्वात्। केषुचित्, अभिधेयेषु वाच्येषु चरितार्थान्, शब्दान् अर्थं प्रतिपाद्य कृतकृत्यान् अर्थोपसर्जनीभूतान् अर्थ विशेषणीभूतान्, लोकः क्रियाङ्गत्वेन न प्रतिपद्यते तान्—शब्दान्, एकत्र विशेषणतयान्वितस्य परत्र-विशेषणतयान्वयायोगः। यथा शुक्लवाससंभोजयइत्यादौ भुजि-क्रियायाम्—अर्थस्यैवान्वयः। अर्थाद् यः शुक्लवासाः पुमान् स एव भोजनमुद्दिश्योपतिष्ठेत, इतरथाऽक्षराणामपि भोजना-पत्तिः प्रवर्तेत, अत्र शब्दानां क्रियान्वयोनास्ति, घट-मुच्चारयेत्यादौ तु भवत्येव। शब्दप्रकरणे विशेषणीभूतः शब्दः। अर्थ प्रकरणे विशेषणीभूतोऽर्थ इति भावः। यद्वाऽनेकार्थहरिशब्दः सूर्यार्थे चरितार्थो गुणभावं भजन् हयार्थे प्रकरणवशाल्लोकोऽन्यार्थं न जानाति

सा—एवतस्य परार्थता, इतरार्थे—उपसर्जनीभूतो गौणीभूतः। केषुचिदनेकार्थेषु ॥५४॥

**ग्राह्यत्वं ग्राहकत्वं च, द्वे शक्ती तेजसो यथा।**
**तथैव सर्वशब्दाना मेते पृथगिवस्थिते ॥५५॥**

यथा तेजसः प्रदीपादेः, ग्राह्यत्वं ज्ञानविषयत्वम्। स्वात्मदर्शनमिति यावत्। ग्राहकत्वं घटादिविषयकज्ञानोत्पादकत्वम्। इत्थं भगवान् भास्करोऽपि स्वं बिम्बं प्रदर्शयन् यावद्विश्वम्भरानिष्ठचराचरवस्तुमात्रं प्रदर्शयति। द्वे शक्ती विद्येते। तथैव सर्वशब्दानां पृथगिवस्थिते ग्राह्य ग्राहकत्वरूपे द्वे शक्ती आसाते। शब्दो वर्णस्वरूपं स्वं रूपं प्रदर्शयन् वाच्यार्थमपिदर्शयति। यद्यपि—घटे ग्राह्यत्व मेव न ग्राहकत्वम्। इन्द्रियादौ ग्राहकत्वमेव न ग्राह्यत्वम्। तथापि प्रदीपादौ समावेशस्यापि दर्शनात्। नतु वस्तुतो हिरुग्भूतेस्तः ॥५५॥

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।**
**न सत्तयैवतेऽर्थाना मगृहीताः प्रकाशकाः ॥५६॥**

सत्ता मात्रेण शब्दा अर्थानामुपस्थापका न भवन्ति। प्रत्युत श्रोत्र विषयतामापन्नै रेव शब्दैरर्थः प्रकाश्यते। इति सरला सरणिः ॥५६॥

**शक्तेर्वाक्यपदीयस्य ब्रह्मकाण्डे ममाधुना।**
**व्याख्या पूर्त्तिमगादेषा शङ्करस्य फलेग्रहेः ॥ १ ॥**

**अतोऽनिर्ज्ञातरूपत्वात्किमाहेतिप्रयुज्यते।**
**नेन्द्रियाणां प्रकाश्येऽर्थेस्वरूपं गृह्यते तथा ॥५७॥**

शब्दो यथा बोधविषयतां समेति, तथेन्द्रियाणि कुतो न, इत्यत्र स्वभाव एव बीजमित्याकांक्षायामाह राजर्षिः श्रीहरिर्विक्रमार्कस्य

ज्यायान् बन्धुः—अतः श्रोत्रगृहीतस्यैव शब्दस्य बोधविषयात्, तद्-भावेऽनिर्ज्ञातरूपत्वान्, भवान् किमाहेत्यन्येन प्रयुज्यते प्रयोगः क्रियते। इन्द्रियाणां स्वरूपंकेनापि न गृह्यते, स्व सत्तयैवतानि—अर्थबोध बीजानि भवन्ति। प्रकाश्येऽर्थे बोध्यविषये ॥५७॥

**भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ।**
**भेदकार्येषु हेतुत्वमविरोधेन गच्छतः ॥५८॥**

द्वौ शब्दधर्मौ ग्राह्यग्राहकत्वशक्ती। एकस्यैवाग्न्यादेः। इतरेषां प्रकाशकत्वेनग्राहकत्वम्। स्वात्मप्रकाशनेन ग्राह्यत्वमपि। अपोद्धृतौ पृथग् भावेनोद्धारीकृतौ। अभेदेऽपिभेदारोपादितिभावः। ग्राह्यत्व-रूपेण वह्नौ संज्ञित्वम। ग्राहकत्वरूपेण वह्नौ संज्ञात्वम्। अतएव-अग्ने ढक्, इत्यत्रोभौ संगच्छेते। भेदाकार्येषुसंज्ञासंज्ञिप्रयुक्तकृतिषु। राहोः शिरः—शीलनाथस्य एक एव शिष्य स एव—ज्येष्ठः सएव कनिष्ठः इत्यादिषु—अविरोधेन हेतुत्वं कारणत्वम् ॥५८॥

**वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः।**
**आदैच्प्रत्यायितैःशब्दैःसम्बन्धंयान्तिसंज्ञिभिः ॥५९॥**

यथा वृद्ध्यादयः शब्दाः स्वरूपोपनिबन्धनाः स्वस्वरूपबोधकाः सन्तः, तथाश्रयतादि सम्बन्धेनान्यार्थप्रतिपादकत्वेन वा, आदैच् प्रत्या-यितैः, बोध्यैः शब्दैः संज्ञिभिः संज्ञाज्ञाप्यैः सम्बन्धं तादात्म्यं यान्ति। वृद्धिपदाभिन्ना आदैचः। वृद्धिरादैच् इत्यत्र आदैचां वृद्धिः संज्ञा। आ—ऐ—औ—संज्ञिनः, व्याकरणे संज्ञिनो ग्रहणं न संज्ञायाः, लोके या संज्ञा तां विना, राजपिण्डाद्यत्प्रत्ययो न भवति। संज्ञात एव यतः संभवः। एव मग्नेर्ढक्, इत्यत्रापि। अभेदेऽपि भेदशक्ति प्रत्यय इति ॥५९॥

**अग्निशब्दस्तथैवाय-मग्निशब्दनिबन्धनः ।**
**अग्निश्रुत्यैति सम्बन्धमग्निशब्दाभिधेयया ॥६०॥**

सूत्रघटकोग्निशब्दः, लक्ष्येणघट्यमानेन सहाऽविरोध इति भावः । अग्निशब्दाभिधेयया बोध्यशक्त्या सह तादात्म्यं संगच्छति। लक्ष्यस्थेन सह सम्बन्धम् ॥६०॥

**यो य उच्चार्यते शब्दो नियतं न स कार्यभाक् ।**
**अन्यप्रत्यायने शक्ति र्न तस्य प्रतिबध्यते ॥६१॥**

यो यो गामुच्चारयेतिशब्द उच्चार्यते निश्चितं यथा स्यात्तथा स शब्दःकार्य भाग्, न भवति, कार्यान्वयी न भवति, संज्ञा हि संज्ञिनं प्रत्याय्य स्वयं निवर्तत इति न्यायात् । वाच्येन सह वाचकस्य सम्बन्धः सर्वदा न तिष्ठति । अर्थ प्रत्यायनकाल एव तदावश्यकत्वात् । तस्य शब्दस्यान्यप्रत्यायने शक्ति र्न प्रतिबध्यते हरिणासृज्यते जगत्" इत्यत्र लोकनाथ परकत्वेऽपि कण्ठीरवादीनामवाध एव ॥६१॥

**उच्चरन् परतन्त्रत्वाद्गुणः कार्यैर्नयुज्यते ।**
**तस्मात्तदर्थैः कार्याणां सम्बन्धः परिकल्प्यते ॥६२॥**

गामुच्चारय—इत्यत्र विशेषणीभूतः शब्दः। गामानयेत्यत्र न युज्यते, एकत्रविशेषणतयान्वितस्यापरत्रविशेषणतयाऽन्वयायोग इति न्यायात् । तथाग्नेर्ढगित्यत्र बोध्यम् तदर्थै रग्न्यादिशब्दार्थैः । आनयनं-ढगादिकार्याणाम् ॥६२॥

**सामान्यमाश्रितं यद्यदुपमानोपमेययोः ।**
**तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ॥६३॥**

भर्तृहरिवद् विद्वान् विक्रमादित्यः । इत्यत्रोपमानोपमेययोः

सामान्यमाश्रितं वैदुष्यं तद्गतसौष्ठवं च तस्य तस्योपमेयगत वैदुष्या दुपमेयगत वैदुष्य सौष्ठवादेवोपमानेऽत्कृष्टय मधिकं भवति ॥६३॥

गुणः　प्रकर्षहेतुर्यः　स्वातन्त्र्येणोपदिश्यते ।
तस्याश्रिताद्गुणादेव　प्रकृष्टत्वं　प्रतीयते ॥६४॥

यः प्रकर्षहेतुः स गुण एव । शुक्लतरः पटः—इत्यत्रपटरूपस्य द्रव्यस्य न प्राधान्यम् । अस्यशुक्लतरंरूपमित्यत्र स्वातन्त्र्येणरूपमादिश्यते । तस्य द्रव्यस्य प्रकृष्टत्वमाश्रिताद्गुणादेव लोकपक्षे—विद्याशीलशौर्यौदार्यादिगुणएवप्रकर्षहेतुः । निर्गुणः किं करिष्यतीतिन्यायात् । गुणादेवशरीरादेः प्रकर्षः । व्याकरणपक्षे—उपोदकम् । गङ्गोदकम् । इत्यादिषु प्रयोगेषु प्रकर्षहेतुर्गुण एव । गुणं विना प्रयोगासिद्धिः—स्यात् । न्यायेचतुर्विंशतिर्गुणाः । क्वचित्त्रयो गुणाः । यद्वा-गुणो रज्जुः—अश्वादीनां बन्धने तस्या एव प्रकर्षः । योगशास्त्रे—गुणपदेन—नेतिधौति प्रभृतयः क्रियाग्राह्याः ॥६४॥

तस्याभिधेयभावेन　यः　शब्दः　समवस्थितः ।
तस्याप्युच्चारणे रूप मन्यत्तस्माद् विविच्यते ॥६५॥

तस्य—अग्निशब्दस्य वाच्यरूपेण लक्ष्यरूपेण वा लक्ष्यरूपोऽर्थः समवस्थितः, उपस्थितो जातः । तस्यापि—वाचकवाच्यस्यापि-उच्चारणे तस्मात्पूर्वस्माद् वाच्याद्—अन्यद् द्वितीयं रूपं विविच्यते विविक्तं भवति । क्वचित्स्वरूपमात्र सम्बन्धी, क्वचिद्व्यक्त्यर्थमात्र सम्बन्धीशब्दः । गामानयगामुच्चारयेत्यादिवत् ॥६५॥

प्राक् संज्ञिनाभिसम्बन्धात्संज्ञारूपपदार्थिका ।
षष्ठ्याश्चप्रथमायाश्च निमित्तत्वाय कल्पते ॥६६॥

प्राक् पूर्वं संज्ञिना—आ—ऐ—औ—इत्यादिनाऽभिसम्बन्धात्संज्ञा वृद्धिः, विभक्तिं विनैव प्रयोगमात्रेण गतार्थास्यादिति। तथापि षष्ठी प्रयोगः प्रथमा-प्रयोगः—"अपदं न प्रयुञ्जीत" इतिसाधनाय, अन्यथाऽर्थवत्त्वाभावात्प्रातिपदिक संज्ञानस्यात्। प्रकृतेसङ्केतग्रहाभावेन शक्तिज्ञानाभाव इतिभावः ॥६६॥

**तत्रार्थवत्त्वात्प्रथमा संज्ञाशब्दाद् विधीयते।**
**अस्येति व्यक्तिरेकश्च तदर्थादेव जायते ॥६७॥**

वृद्धिरादैच्—इत्यत्र—अर्थवत्वात्प्रथमा निर्दिष्टाऽस्ति। आदैचः संज्ञिनोवृद्धिःसंज्ञा। कस्यवृद्धि संज्ञा तदर्थादेव जायते विशेष्यविशेषणभावे व्यक्तिरेकैव। यथा मृतो देवदत्तः, मरणंकस्यदेवदत्तस्यैव ॥६७॥

**स्वंरूपमितिकैश्चित्तु व्यक्तिःसंज्ञोपदिश्यते।**
**व्यक्तौ कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते ॥६८॥**

"स्वंरूपंशब्दस्याऽशब्दसंज्ञा" इति सूत्रे-या व्यक्तिः सासंज्ञेत्युच्यते। संज्ञाशब्दरूपात्र।

**संज्ञिनि जातिस्तिष्ठति। व्यक्तिं विनाजातेर भावात्।**
**कार्यकारिताव्यक्ता वेव। अतोव्यक्तौसंसृष्टाजातिः ॥६८॥**

**संज्ञिनीं व्यक्तिमिच्छन्ति सूत्रग्राह्या मथा परे।**
**जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ॥६९॥**

अथ—अपरे सूत्रबोध्यां व्यक्तिं संज्ञिनीं काङ्क्षन्ति। वाच्यरूपाम्। के चन जातिं कामयन्ते। जातिः खलु—अनेकेषुस्थिता सतीव्यक्तिंगमयति। अतः—जाति प्रत्यायिता बोधिता व्यक्तिः प्रदेशेषु—

प्रयोगेषु घटादिषु–उपतिष्ठते व्यक्तिनाशेऽपि न जातिर्व्यभिचरतीति-भावः । व्यक्तेरानन्त्याज्जाताविवशक्तिः । अतो व्यक्तिं संज्ञिनी-मिच्छन्ति ॥६९॥

**कार्यत्वे नित्यतायां वा केचिदेकत्ववादिनः ।**
**कार्यत्वेऽनित्यतायां वा केचिन्नानात्ववादिनः ॥७०॥**

स एवायं गकार इति प्रत्यभिज्ञा नित्यपक्षे । तदेवौषधमित्यादौ सजातीयेऽपिदर्शनान् इत्याद्यनित्यपक्षेऽनुसन्धातव्यम् ॥७०॥

**पदभेदेपि वर्णाना मेकत्वं न निवर्तते ।**
**वाक्येषुपदमेकञ्च भिन्नेष्व प्युपलभ्यते ॥७१॥**

वर्णानां पदभेदेऽपि नानात्वेऽपि, एकत्वं न निवर्तते । समुदाय गत्यातिष्ठति । वाक्येष भिन्नेषु–अपि–एकं–पदमुपलभ्यते–घटमानय घटोऽस्तीति गोरक्षोरक्षकः वनं सेना–परमलोकनाथ इत्यादीन्युदा-हर्त्तव्यानि ॥७१॥

**तद्वर्णव्यतिरेकेण पदमन्यन्न विद्यते ।**
**वाक्यंवर्णपदाभ्यां च व्यतिरिक्तंन किंचन ॥७२॥**

तस्माद् वर्णव्यतिरेकेण वर्णान्विहाय । अन्यत्पदन्नविद्यतेनास्ति । वर्णै रेव पदं जायते । एष राजर्षिर्भर्तृहरिवाक्यपदीयं व्याकरोति "इदं वाक्यं वर्णपदाभ्यांभिन्नं नास्ति वर्णपदै रेव वाक्यं वोभोति वाक्यंचएकतिङ्न्तार्थ निष्ठमुख्यविशेष्यताकबोधजनकमिति ॥७२॥

**पदे न वर्णा विद्यन्ते वर्णेष्व वयवा नच ।**
**वाक्यात्पदाना मत्यन्तंप्रविवेको न कश्चन ॥७३॥**

पदे प्रतीयमाना अपि वर्णा न सन्ति । वर्णेषु–ऋकारौकारादिषु प्रतीयमाना अपि–अवयवा अवयव तुल्या रेफादयो न विद्यन्ते ।

एतेन—स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वमपिसूचितंभवति। तथा वाक्यात्पदाना मपि प्रविवेकःपृथग् भावः कश्चन नास्ति। अर्थावलम्बिन्यां बुद्धावभेदात्। दक्षन्यदे—पदे उत्तमराजकीयपदे वर्णा आद्यास्तदयो न सन्तितत्र योग्यतैव प्रशस्यते। चतुरोविहाय वर्णान्तरं नास्ति ॥७३॥

**भिन्नं दर्शनमाश्रित्य व्यवहारोऽनुगम्यते।**
**तत्र यन्मुख्य मेकेषां तत्रान्येषां विपर्ययः ॥७४॥**

वर्णाः सत्याः पदानि वाक्यानि चा सत्यानि पक्षएकः। गौरित्यत्र "गकारौकार विसर्जनीयाः" इतिव्यवहारः। वाक्यानि सत्यानि वर्णाः पदानिचासत्यानि—इत्यपरं दर्शनमाश्रित्य यस्य यन्मुख्यमस्तितत्र मुख्येऽन्येषांविपर्ययः व्यत्यासः। यद्वा दर्शनं ज्ञानं भिन्नमाश्रित्य व्यवहारोऽनुगम्यते भाष्यादौ हलोऽनन्तराः संयोगः" इति सूत्रे स्पष्टम्। यद्वा दर्शनं दर्शनशास्त्रमतं भिन्नमाश्रित्यानु-सन्धेयम् ॥७४॥

**स्फोटस्या भिन्नकालस्य ध्वनिकालानुपातिनः।**
**ग्रहणोपाधिभेदेन वृत्तिभेदंप्रचक्षते ॥७५॥**

उपाधिना एव स्फोटात्मा भिद्यते नतु वास्तविको भेदः। अयमेव विचारनाथस्याभिप्रायः। अतएव—अभिन्नकालस्य नित्यस्य कालकृतपरिच्छेदशून्यस्य नित्योहिपदार्थः न कालेन परिच्छिद्यते। ध्वनिकालमनुप ततीतिध्वनिकालानुपाती तस्यध्वनिकालानुपातिनः। स्फोटस्य ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते वैयाकरणाः। द्रुतामध्यमा विलम्बिता वृत्तयः। तदुक्तंत-परस्तत्कालस्य "सूत्र भाष्ये अचलनाथेन महर्षिपतञ्जलिना—यथा भेर्या हन्ताभेरीमाहत्य कश्चिद्-विंशातिपदानिगच्छति। कश्चित् त्रिंशत् कश्चिच्चत्वारिंशत्स्फोटस्तावानेवध्वनिकृता वृद्धिः" इति। ध्वनिर्व्यञ्जककालः ॥७५॥

**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।**
**प्राकृतस्यध्वनेःकालः शब्दस्येत्युपचर्य्यते ॥७६॥**

ध्वनेः स्वभावभेदात्–अल्पमध्योच्चैरुच्चारणरूपात् । ह्रस्वदीर्घ-प्लुतादिष विद्यमानेषु सत्स्वपि शब्दस्य कालः यद्वर्णोच्चारणपरि-माणपरिमितः । नित्यत्वे सत्यपि घटी पलघण्टादिरूपेण यद्वा–एक मात्रिक द्विमात्रिकादिरूपेण उपचर्यते–आरोप्यते, वस्तुतोनिरवयः कालः ॥७६॥

**वर्णस्यग्रहणे हेतुः प्राकृतोध्वनिरिष्यते ।**
**वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥७७॥**

यथा गत्या वर्णज्ञानं सध्वनिः । प्राकृतो नाम । पश्चाद् येन-ध्वनिनाद्रुता मध्यमा विलम्बितेतिध्वनित्रयंवृत्तित्रयं भवति स ध्वनि-वैंकृतनामकः । सर्वासुवृत्तिषु वर्णाना मुपचयापचयौ चकास्तः । यथा गन्तॄणांगतिभेदेऽपि न मार्गभेदः ॥७७॥

**शब्दस्योर्ध्वमभिव्यक्ते वृत्तिभेदेतु वैकृताः ।**
**ध्वनयः समुपोहन्ते, स्फोटात्मातैर्न भिद्यते ॥७८॥**

अभिव्यक्ते ऊर्ध्वं शब्दस्य स्फोटस्य जायमाना वैकृताध्वनयः वृत्तिभेदे द्रुतादिवृत्तिभिदायाम् । समुपोहन्ते । संघाताः संहताः संमि-लिता भवन्ति । यद्वा मध्यमादीनांकारणानि भवन्ति । परन्तु स्फो-टात्मा वृत्ति प्रतिबिम्बितं वस्तु, तैर्वैकृतैर्ध्वनिभिर्न भेदं प्राप्नोति तस्य नित्यत्वायात् ॥७८॥

**इन्द्रियस्यैव संस्कारः शब्दस्यैवोभयस्य वा ।**
**क्रियतेध्वनिभिर्वादास्त्रयोभिव्यक्तिवादिनाम् ॥७९॥**

शब्दाभिव्यक्तिवादिनाम , त्रयोवादाःसन्ति तानुत्थापयति श्रीहरिः-तत्रध्वनिभिः श्रोत्रस्यैवसंस्कारः. क्रियते संस्कृतेन शब्दो गृही-तो भवति। संस्कृतं श्रोत्रंशब्दोपलाभे द्वारता मासादयति। चक्षुषोऽनुग्रहं-कुर्वदुपनेत्रं चाक्षुषस्य वर्णमालाविषयस्याभिव्यञ्जकं तथा ध्वनिपक्षे योज्यम्। शब्दस्यैवसंस्कारः। उभयस्य शब्दस्य श्रोत्रस्य च, इत्थं त्रयो वादा भवन्ति ॥७९॥

**इन्द्रियस्यैवसंस्कारः समाधानाञ्जनादिभिः।**
**विषयस्यतु संस्कारस्तद्गन्धप्रतिपत्तये ॥८०॥**

इन्द्रियस्यैव नेत्रस्यैव संस्कारः समाधानं चित्तैकाग्र्यं तेन अञ्ज-नादिभिः। आदिशब्देन पुनर्नवादिविधि र्ग्राह्यः। अतएव चक्षुषैव घटोदृश्यते नश्रुत्या। तद् गन्धप्रतिपत्तये पृथ्वीनिष्ठगन्धप्राप्तये विष-यस्य संस्कारः। भगवत्सूर्यसंतप्तभूमौतात् कालिकवर्षाभिः ॥८०॥

**चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि।**
**विषयेन्द्रिययो रिष्टः संस्कारः सक्रमोध्वनेः ॥८१॥**

चाक्षुषाध्यक्षे—आलोकेन विषयेन्द्रिययोर्द्वयोरपि संस्कारइष्टः। तेजसा घटोऽपिप्रकाश्यतेचक्षुरपि। घटस्यासंस्कारेऽन्धकारेऽपि घटो दरीदृश्यते। ध्वनिना शब्दोऽपि श्रोत्रमपि प्रकाश्येते, एतद्देशावच्छे-देनोच्चारितः शब्दः परत्र न श्रूयते। अन्यथा शोश्रूयेत, घटध्वनिः पटगमको न ॥८१॥

**स्फोटरूपाविभागेनध्वनेर्ग्रहणमिष्यते ।**
**कैश्चिद्ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यप्रकाशकः ॥८२॥**

स्फोटेनसहाभेदान्वयेनध्वनेर्ग्रहणं क्रियते। कैश्चिदुच्यतेध्वनि-रसंवेद्योऽप्रत्यक्षः स्वेनग्रहीतुंन शक्यते। यद्वा ध्वनिः शब्दः श्रोत्रेण-

ग्रहीतुंशक्यते। सूक्ष्मोध्वनिः योगजधर्मेण। तादृशयन्त्रेणापि। यद्वा-ध्वनिः परमाणुनिर्मितो गोलाकारः पिण्डः। तस्यग्रहणं स्फोटात्पूर्व-मेव तथासति हन्यादेव। तादृशःपरमाणु गोलकः, असंवेद्यो वैज्ञा-निकै रेव ज्ञातुं शक्यते, विरुद्धानां परमाणूनां पार्थिवतैजसानां वैद्युता-दीनां रविकिरणैः सहसंश्लेषः।

**यथानुवाकःश्लोको वा सोढत्वमुपगच्छति।**
**आवृत्त्या नतु स ग्रन्थः प्रत्यावृत्त्या निरुप्यते ॥८३॥**

यथा—अनुवाको मन्त्र-समुदायः श्लोको वाऽनेक-वाक्यय-समु-दायः यद्वाऽनेकपदसमुदायः सोढत्वम्—एक—ज्ञान—विषयत्व—मुपग-च्छति प्राप्नोति संस्काररूपेणैकाकारतां प्रयाति। अस्यश्लोकस्यायं भावः सम्याज्ञात इति। पक्षान्तरे तु किन्तु सग्रन्थ आवृत्त्या सोढत्वं न प्रयाति। यतोहि स प्रत्या—वृत्त्या—वारंवारमावृत्या ग्रन्थो निरुप्यते ॥८३॥

**प्रत्ययै रनुपाख्येयै ग्रहणानुगुणैस्तथा।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥८४॥**

अनुपाख्येयैः, अकथितैः प्रत्ययैः सूत्रानुक्तै रुणादिगणनिष्ठै ग्रहणानुगुणैः शब्दसिध्द्युपकारकैः, ध्वनिः प्रसिद्धिस्तेनध्वनिना प्रका-शिते शब्दे स्वरूप मर्थः अवधार्यते निश्चीयते। लौकिक वैदिक प्रयुक्तप्रयोगगत्या प्रत्ययानुमानम्। शब्दानामानन्त्यात्सर्वे शब्दाः-सप्रत्ययाः सूत्रैर्निर्देष्टुं न शक्यन्तेः। प्रयुक्तशब्दैरेव-प्रत्ययानुमानमि-तिभावः ॥ अथ द्वितीयोऽर्थः—प्रत्ययैर्ज्ञानै रनुपाख्येयै रज्ञातैर्ग्रहणानु-गुणैः सर्वोप कारकैः, ध्वनिप्रकाशिते ध्वनियन्त्रप्रकाशिते शब्दे स्व-रूपं निश्चीयते तादृशयन्त्रं विना शब्दाग्रहणात् ॥ तृतीयार्थे—ध्वनि-ना व्यक्ते स्फुटे शब्दे स्वरूपं स्फोटरूपं निश्चीयते। आचान्तरज्ञानैः,

सकृज्ज्ञानेन द्विर्ज्ञानेन वा स्फोटात्मा न प्रकाशते किन्तु सकलध्वनिभिः ॥८४॥

**नादैराहितबीजाया मन्त्येन ध्वनिना सह ।**
**आवृत्तपरिपाकायां बुद्धौ शब्दः प्रकाशते ॥८५॥**

नादैः पूर्वपूर्वध्वनिभिः । आहितबीजायाम्—स्थापितबीजायाम् । बीजं सम्यक् प्रकाशानुगुणसामर्थ्यम् । आवृत्तपरिपाकायां बुद्धौ, आवृत्तोऽभ्यस्तः परिपाकोऽपचेलिमावस्थाऽभावः । यस्याः सा तस्याम् । बुद्धावन्तः करणे जीवात्मनि बुद्धिरूपेण जीवः स्वयं परिणमते । नतु बुद्धिर्जीवात्पृथक्तत्वम् । अन्त्येन ध्वनिना वर्णेन सह शब्दः स्फोटोऽवधार्यते प्रकाशते । यद्वानादो नाम वर्णातिरिक्तो वर्णव्यञ्जको वायुः । यद्वा वायु गुणः । नादो वर्णोऽपि । शब्दश्च वायु गुणो नाकाश गुणः । अतएव महाभाष्ये—आकाश देशः शब्द इत्यबोधि महर्षिणा ॥८५॥

**असतश्चान्तराले याञ्, छब्दानस्तीतिमन्यते ।**
**प्रतिपत्तुरशक्तिः सा, ग्रहणोपाय एव सः ॥८६॥**

अन्तराले ध्वनिप्रकटकालस्पष्टशब्दग्रहणयो र्मध्ये असतोऽसत्यान् यान् शब्दान् वर्णरूपान् वर्णायवक पदरूपान् । पदावयवक वाक्यरूपान्, अस्तीति मन्यतु, अखण्डस्फोटत्वेन स्वीकरोति । सा प्रतिपत्तुर्बोद्धुरशक्ति रसामर्थ्यम् । स्फोटस्तु निरवयवोऽखण्डः । किन्तु सः अन्तराले मध्ये स्फोटत्वेन शब्द ग्रहण रूपोऽक्रमः,अक्रमस्य सत्यस्य स्फोटस्य ग्रहणोपाय एव न साक्षात् स्फोटः ॥ पक्षान्तरे—अन्तराले मध्यकालिकयुगे यानसतोऽसत्यान् साइकलमोटररेल रेडियो प्रभृतीन, शब्दान् अस्तीतिशुद्ध संस्कृतभावेन वैदिकत्वेन वा मन्यते स्वीकरोति, सा प्रतिपत्तुः, असंस्कृतशब्दान् संस्कृतेनेतुम

शक्तिः। स एष ग्रहणोपाय एव। असत्यान् शब्दान् सत्ये पथि नेतुं प्रकार एव सत्यविज्ञानस्यैष आभासः तस्मादेतेभ्योऽसंस्कृत शब्देभ्योविभक्तिप्रकारो नो पादशि प्रेक्षावद्भिर्भाष्येतु-अपदं न प्रयुञ्जीतेत्येवम् ॥८६॥

**भेदानुकारो ज्ञानस्य वाचश्चोपप्लवोध्रुवः।**
**क्रमोपसृष्टरूपाया ज्ञानं ज्ञेयव्यपाश्रयात् ॥८७॥**

अभिन्नस्यापि ज्ञानस्य ज्ञेयव्यपाश्रयाद् भेदानुकारः—यथा घटज्ञानं पटज्ञानमित्यादि ज्ञानत्वाविशेषेऽपि तयोर्भिदा। तथैव क्रमोपसृष्टरूपायाः स्फोटवाचोऽपि—उपप्लवो ध्रुवउपप्लव उपसर्गः—कल्पनेति, ज्ञानेविषयावभासस्यभेदः। स्फोटेवर्णपदावभासरूपोभेदः। स्फोटरूपा वाग्—अक्रमापि क्रमेण घटः पटः—इत्यादिध्वनिगतक्रमरूपा। एकः स्फोटः पदानां वाक्यानां भेदश्च साधुरेव ॥८७॥

**यथाद्यसंख्याग्रहणमुपायः प्रतिपत्तये।**
**संख्यान्तराणां भेदेऽपि तथा शब्दान्तरश्रुतिः ॥८८॥**

वाक्यस्फोटप्रतिपत्तये—अवान्तरपदश्रवणमिति भावः। सख्यान्तराणां प्रतिपत्तये—आद्यसंख्याग्रहणमुपायः। एकत्वादितः शतत्वादीनां भेदःस्फुट एव। एकत्वादिग्रहणं शतत्वादिज्ञानाय, तथा प्रकृतेऽपि ॥८८॥

**प्रत्येकं व्यंजकाभिन्ना वर्णा वाक्यपदेषु ये।**
**तेषामत्यन्तभेदेऽपि सङ्कीर्णाइव शक्तयः ॥८९॥**

वाक्येपु पदेषु च वर्णाव्यंजका अभिव्यंजकाज्ञापका भिन्ना विभिन्ना नानेत्यर्थः। वर्णरूपाध्वनय इत्यर्थः। स्थानभेदाद्ध्वनिभेदः। किन्तु—भेदेऽपि—अत्वगोत्वादिरूपेण सर्वत्र साम्यम्। न व्यक्तिभेदे जातिभेदः। सङ्कीर्णा इव न सङ्कीर्णाः ॥८९॥

**यथैव दर्शनैः पूर्वैर्दूरात्संतमसेऽपि वा ।**
**अन्यथाकृत्य विषयमन्यथै-वाध्यवस्यति ॥९०॥**

दूरदोषाद्वा मन्दतरालोके यथापूर्वदर्शनैः प्राथमिकलोकनैः स्थाणुत्वाभावप्रकारको बोधोजायते । पश्चात्स्पस्टे सति स एव बोधः स्थाणुत्वप्रकारको जायते न पुरुषत्वप्रकारकः । एवं प्रकृते वर्णपदाकारेण भासमानोऽपि वाक्यस्फोटः—अन्तिमध्वनिप्रकाशनेवलायां स्वस्वरूपेण प्रकाशितो भवति । अध्यवस्य निश्चिनोति स न भ्रमः ॥९०॥

**व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः ।**
**भावावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ॥९१॥**

वाक्याभिव्यक्तिहेतुभिध्वनिभिर्व्यज्यमानेप्रकाश्यमाने वाक्ये वाक्यस्फोटे भागावग्रहरूपेण वर्णपदाद्यात्मकावयवस्वरूपेण पूर्वं ज्ञानं प्रवर्तते, यश्चादखण्डाकारता माधत्त इत्यर्थ ॥९२॥

**यथानुपूर्वी नियमो विकारे क्षीरबीजयोः ।**
**तथैव प्रतिपत्तृणां नियतो बुद्धिषुक्रमः ॥९२॥**

आभासानन्तरं निश्चयरूपा बुद्धिर्जायते—इत्यत्र आह—पूर्वं वर्णावग्रहा बुद्धिस्ततः पदावग्रहा बुद्धिः, ततो वाक्यावग्रहाबुद्धिः, इत्थं स्फोटक्रमः । दृष्टान्ते—क्षीरबीजयो विकारे—आनुपूर्वीनियमः—प्रथमं पयः किंचित्कठिनंततोऽधिकंकठिनं ततो दधि । बीजेपूर्वं बीजं द्वैधी भवति, ततोऽङ्कुरो विलसति, द्विपत्रितः, ततः पल्लवित स्तरुर्भवति । प्रथमावस्थाद्वितीया, द्वितीया च प्रथमा केनापि कर्त्तुं न शक्या शकला ॥९२॥

**भागवत्स्वपितेष्वेव रूपभेदो ध्वनेः क्रमात् ।**
**निर्भागेष्वप्युपायो वा भागभेदप्रकल्पनम् ॥९३॥**

नदी दीनयो रविशेषो माभूदित्याह राजर्षिः—भागाः खण्डाः सन्ति येषु तेषु भागवत्सु, सखण्डेषु। मीमांसकमते वर्णातिरिक्तं पदं वाक्यं वा नास्ति। मिलितवर्णानामेव पदत्वं वाक्यत्वं ते संगिरमाणाः सन्ति। तेषु ध्वनेः क्रमादूरूपभेदः। निर्भागेषु—भागान्निष्क्रान्ता येषु तेषु—अखण्डपदादि स्फोटेषु रूपभेदः प्रकल्पनमुपायः। मीमांसकमतेऽनन्तानन्तपदानां वाचकत्वमनन्तानन्तध्वनीनां व्यञ्जकत्वम्। अखंड स्फोटो वाचको वैयाकरणाध्वनीनामध्वनि, अद्धा ॥९३॥

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।**
**कैश्चिद् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥९४॥**

जातिस्फोटवादिनां मतमाह—श्रीहरिः—आकृतिनित्यत्वाच्छब्दनित्यत्वम्। अनेकाभिर्वर्ण व्यक्तिभिर्ज्ञाप्या, अनुगत प्रतीत्या पटोपस्थितिं प्रति पटपदज्ञानत्वेनहेतुत्वेन तदवच्छेदकतया पटत्वस्य। सिद्धापटपदत्वादिरूपा। अर्थगतजातेः शक्यत्वम्। शब्द गतजातेः शक्तत्वम्। अस्या जाते र्व्यञ्जकत्वेन ज्ञापकत्वेन शब्दो व्यक्तय एव स्वीकृताः। ध्वनिः शब्दः। अन्त्यवर्णप्रत्यक्षकाले पूर्वं पूर्वं वर्णानुभवोत्पन्नसंस्कारसध्रीचीनतयाऽभिव्यक्ता भवति। स्फोटेन शब्दत्वजातिः स्फुटत्यर्थोस्मादिति सः ॥९४॥

**अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः।**
**उपलब्धौनिमित्तत्वमुपयाति प्रकाशवत् ॥९५॥**

अविकारस्य विकाररहितस्य शब्दस्य निमित्तैः स्थानप्रयत्न वायुसंयोगादिभि र्विकृत उत्पादितो विकारंनीतः प्राप्तविकारइति यावद् ध्वनिः। उपलब्धौ प्रकाशवन्निमित्तत्वमुपयाति। घटादि ज्ञाने प्रकाश एव हेतुः तदभावेनाध्यक्षः ॥९५॥

**नचानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।**
**आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥९६॥**

अनित्येषु घटादिषु नियमेन अभिव्यक्तिः, प्रकाशः, न व्यवस्थिता । यतोहि-आश्रयैराधारभूतैर्घटादिभिरेवनित्यानां जातीना व्यक्ति रभिव्यक्तिः प्रकाश इष्यते इष्टो भवति,—घटत्व पटत्व गोत्वादयो जातयो घटपटगोव्यक्तिसमाश्रिताः । नहि घटं विना घटत्वं केनापि दृष्टम् ॥९६॥

**देशादिभिश्च सम्बन्धो दृष्टःकायवतामिह ।**
**देशभेदविकल्पेऽपि न भेदोध्वनिशब्दयोः ॥९७॥**

यद् देशे घटस्तद्देशे दीपेन भाव्यं, देवदत्तनिलयस्थदीपो यज्ञदत्त गृहस्थवस्तुजातं प्रकाशयितुं न समर्थः । प्रकृतेहार्दाकाशस्थितः स्फोटः स श्रोत्रस्थितैर्ध्वनिभिस्ताल्वोष्ठादिव्यापारसमुद्भूतैः कथं व्यङ्ग्यः स्यादित्याशङ्कायामाह भूपति वृन्दारकः देशादिभिश्चेति—कायवतां मूर्त्तानां कृते सनियमो दृष्टः । आकाशस्यैकत्वेन न देशभेदः । ध्वनिः श्रोत्रद्वाराहृदि गच्छत्येव, वैखरी व्यापारोध्वनिः ॥९७॥

**ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।**
**व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ॥९८॥**

गृह्यतेऽनेनेतिग्रहणम्—इन्द्रियम् । गृह्यन्ते इतिग्राह्याः । विषयाः । यथात्रनियता योग्यता सिद्धा । घ्राणकार्यं न चक्षुषा भवति चक्षुषःकार्यं न घ्राणेन । रूपे चक्षुर्ग्राह्यता । चक्षुषि रूपग्राहकता । द्विविधानीन्द्रियाणि—कानिचित्स्वजातीयद्रव्यमात्र—समवेत—गुणग्राहकाणि, कानिचित्स्वजातीय-विजातीय—द्रव्यानुस्यूतगुणग्रहिलानि । तथा प्रकृते स्फोटोव्यङ्ग्यो नादो व्यञ्जकः ॥९८॥

**सदृशग्रहणानांच गन्धादीनां प्रकाशकम् ।**
**निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितम् ॥९९॥**

समानेन्द्रियग्राह्याणां गन्धादीनां प्रकाशकं ज्ञापकं निमित्तं निमित्त कारणं लोके प्रतिद्रव्यमवस्थितं नियतं दृष्टम् । पार्थिवं घ्राणं गन्धेन गन्धानध्यक्षीकरोति । एवं सर्वत्रोहनीयम् ॥९९॥

**प्रकाशकानां भेदांश्च, प्रकाश्योऽर्थोऽनुवर्तते ।**
**तैलोदकादिभेदे तत्प्रत्यक्षं प्रतिबिम्बके ॥१००॥**

यथाजलचन्द्रो बहुधा प्रतीयते, तथा प्रकाश्योऽर्थअभिव्यङ्ग्यः । प्रकाशकानां ज्ञापकानां भेदान्अनुवर्तते । दृष्टान्ते—यथातैल-जलदर्पणादि भेदेन नानात्वं भजते, अर्थात्—अभिव्यञ्जके भेदेऽभि-व्यङ्ग्यभेदः । अत्र प्रकृते—अभिव्यञ्जको ध्वनिः, अभिव्यङ्ग्यः स्फोटात्मा ॥१००॥

**विरुद्धपरिमाणेषु वज्रादर्शजलादिषु ।**
**पर्वतादिसरूपाणां भावानां नास्ति संभवः ॥१०१॥**

सम्प्रति दृष्टान्तासङ्गतिं वारयति—पर्वतचन्द्रादिविरुद्धं परिमाणं येषां तेषु, लघुपरिमाणेषु—आदर्शादिषु पर्वतादिसरूपाणां भावनां संब-न्धो नास्ति । आभासस्तु स्यादेव ॥१०१॥

**तस्मादभिन्नकालेषुवर्णवाक्यपदादिषु ।**
**वृत्तिकालः स्वकालश्च, नादभेदाद्विभाव्यते ॥१०२॥**

तस्माद् व्यङ्ग्ये व्यञ्जकधर्मानुगमदर्शनात् । कालभेदरहितेषु वर्णवाक्यपदादिषु, वर्णः ककारादि वाक्यं गोरक्षो रक्षतीत्यादि, पदं लोकनाथादि, आदिना वाक्यसमुदायमहावाक्यस्यग्रहणम् । वृत्ति-

कालः, द्रुतादिभेदः। स्वकालः—ह्रस्वदीर्घाद्यवधिः कालः। नादभेदाद् ध्वनिभेदात्प्राकृतवैकृतध्वनिभेदादिति। विभाव्यते प्रतीयमानो भवति ॥१०२॥

**यः संयोगविभागाभ्यां करणैरुपजन्यते ।**
**स स्फोटः शब्दजाःशब्दाध्वनयोऽन्यैरुदाहृताः ॥१०३॥**

करणैः कण्ठताल्वादिभिः संयोगवियोगाभ्यां वायुसंयोगविभागाभ्यां यः शब्दः पूर्वमादौ—उपजन्यते —उत्पन्नो भवति स स्फोटः। उत्तरोत्तरशब्दानां हेतुः। ये च शब्दजाः पूर्वस्फोटशब्दजाः शब्दाः, ते ध्वनयोऽन्यैः स्फोटकार्यत्वमाचक्षाणैः प्रेक्षावद्भिरभाणिषत। इदं च नादस्फोटयोः कार्यपक्षे स्वरूपम्। वैयाकरणाः प्राकृतध्वनिरिति तमेव नैयायिका वाचकशब्दं व्यवहरन्ति। वैकृतध्वनिं ध्वनिमित्याहुः ॥१०३॥

**अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।**
**परस्तु शब्दसन्तानः प्रचयापचयात्मकः ॥१०४॥**

शब्दो ह्यमूर्त्तोऽतः स्फोटकालो न भिद्यते। अल्पे—महति वा शब्दे संजातेऽपि। इतरः कार्यभूतः शब्दसन्तानः प्रचयापचयात्मकः, प्रचयोऽधिकदेशवृत्तिः,—अपचयोऽल्पदेशवर्त्तनमिति। उच्चैरुच्चारिते सति ध्वनिरधिकदेशं व्याप्नोति, अकाराकारः स एव। अधिकाल्पदेशविषया शब्दव्याप्तिर्वैकृतकृता ॥१०४॥

**दूरात्प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।**
**घण्टादीनां च शब्देषु व्यक्तो भेदः स दृश्यते ॥१०५॥**

स्फोटः, ध्वनिना सह संभवति, दीपः प्रभया सह समुदेति। किन्तु दूराद् दीपदर्शनं न जायते प्रभामात्रस्य दर्शनम्। प्रकृतेऽपि

प्रभेव ध्वनिमात्रं लक्ष्यते न स्फोटः। दृष्टान्ते—घण्टादीनां शब्देषु स भेदो व्यक्तो भवति, रणत्कारो दूरधावी ॥१०५॥

**द्रव्याभिघातात्प्रचितौ, भिन्नौदीर्घप्लुतावपि।**
**कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः ॥१०६॥**

द्रव्यं स्थानं करणं वायुः—द्वयोरभिघातः शब्दहेतुभूतसंश्लेषः। तस्मात्, प्रचितौ समेधमानौ वर्धिताविति दीर्घप्लुताविति। तु किन्तु कम्पे स्पन्दे—उपरते शान्ते सति वृत्तेर्विशेषका द्रुतादिवृत्तिव्यवस्थाहेतवः। दीर्घप्लुतौ हित्वा। नादाः शब्दा वैकृतध्वनयो जायन्ते। घण्टादिवत्। यद्वा दीर्घः साहसी पुमान् प्लुतश्चञ्चलः पुरुषः, तौ द्वावपि द्रव्याभिघातात्संयोगाद् हेतोर्वर्धितौ द्रव्यदानेन संतोषितौ ततोद्रव्यालाभे कम्पे कम्पने शान्ते सति वृत्तेः स्वस्वव्यवहारस्य विशेषका ज्ञापका नादाः शब्दाः प्रसिद्धयो जाताः संजातास्तयोः द्वावपि कृतार्थौ समजायेताम् ॥१०६॥

**अनवस्थितकम्पेऽपि करणे ध्वनयोऽपरे।**
**स्फोटादेवोपजायन्ते ज्वाला ज्वालान्तरादिव ॥१०७॥**

अपरे ध्वनयो वैकृतनामानः, करणे वाय्वादौ स्फोटादेव प्रथमनादादेव, नानुवर्तमानस्पन्देऽपि उपजीवन्ति, कस्मात्क इव ज्वालान्तरा ज्वालेवोत्पद्यन्ते। द्वितीयनादाः, द्रुतादिवृत्तीः प्रकाशयन्ति। आयुर्वेदपक्षे—स्फोटादेव पिटकादेव व्रणादेवेतियावत्। ज्वालाः पीडा ज्वालान्तरादिव, कम्पाभावेऽपि कदोपजायन्ते—करणे सति करणमपथ्यम्। अपथ्ये सति स्फोटादपिज्वाला जायन्ते। पीडया अपरे ध्वनयो हाहाकारशब्दाः ॥१०७॥

**वायो रणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते।**
**कैश्चिद् दर्शनभेदोहि प्रवादेष्वनवस्थितिः ॥१०८॥**

अत्र वायुरेवशब्दः। अणव एव। ज्ञानमेव। कैश्चिद्‌दिष्यतेऽत इयत्ता नास्तीति दर्शनभेदः १०८

**लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।**
**स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥१०९॥**

वक्तुः, इच्छानुवर्तिना प्रयत्नेन लब्धक्रियः, प्राणवायुः, स्थानेषु कण्ठतालुजिह्वामूलादिषु, अभिहतः, शब्दजनकसंयोगाश्रयतां प्राप्तः शब्दत्वं संगच्छति। तथा च भगवान् गोरक्षनाथो विवेक मार्त्तण्डे— पवनं गगने प्राप्ते ध्वनिरुत्पद्यते महान्। घण्टादीनां प्रवाद्यानांतदा-सिद्धिरदूरतः॥ पाणिनीय शिक्षायामपि तथैव ॥१०९॥

**तस्यकारणसामर्थ्याद्वेगप्रचयधर्मणः ।**
**सन्निपाताद्विभज्यन्ते, सारवत्योऽपि मूर्त्तयः ॥११०**

वेगः संस्कारविशेषः। प्रचयः शिथिलसंयोगः। तौ धर्मौ यस्य तस्य। तस्यानिलस्य सन्निपातात्सम्बन्धात्संयोगादित्यर्थः। सारवत्योऽपि बलवत्योऽपि मूर्त्तयः पस्त्यपर्वतवृक्षादयोऽपि विभज्यन्ते त्रुटिता भवन्ति। तर्हि का कथा कण्ठताल्वादिसंयोगस्य। आयुर्वेदपक्षे वेगः कम्पादिः, प्रचयो दोषाणाम्। कारणसामर्थ्यात्—सन्तिपातात् सन्निपातरोगात् सारवत्योऽपि मूर्त्तयः शक्तिमन्तोऽपि—दन्तावलक्रमेलक लुलायाश्वादयोऽपि पतन्ति। सन्निपातस्य लक्षणं निदाने मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च। चिरात्पाकश्च दोषाणां सन्निपातः स उच्यते॥ सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः। शोथः संजायते तेन कश्चिदेव प्रमुच्यते॥ मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता। यस्तु तत्रा भवेज्जेता सजेताऽऽमयसंकुले॥ सप्तमे दिवसे प्राप्ते, दशमे द्वादशेऽपि वा। पुनर्घोतरो भूत्वा प्रशमं याति हन्ति वा ॥११०॥

**अणवः सर्वशक्तित्वाद् भेदसंसर्गवृत्तयः ।**
**छायातपतमः शब्दभावेन परिणामिनः ॥१११॥**

सर्वशक्तिसत्त्वात्परमाणवो हि च्छायातपतमःशब्दभावेन भेद संसर्गवृत्तयः सन्तः परिणामिनो भवन्ति । भेदो विभागः संसर्गः संयोगस्तयोर्वृत्तिर्येषु, शब्दभावेन परिणता भवन्ति । एकविधा एव परमाणवश्छायारूपेणातपरूपेण तमोरूपेण शब्दरूपेण च परिणताबेभुवति मामवति च जगत् । इदं वर्णनं जैनमतानुबन्धि । न्यायपक्षे—निमित्त कारणीभूत ईश्वर स्तं विना परमाणवः क्रियाशीला न भवन्ति॥१११॥

**स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।**
**अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥११२॥**

प्रयत्नेन समीरिता उदीर्णाः स्वशक्तौ तत्तत्पदार्थ रूपेण परिणाम जनकता शक्तौ व्यज्यमानायां सत्यां शब्दाख्याः—घटपटादिकारण स्वरूपाः परमाणवः, अभ्राणीव वर्षासु प्रलिप्तपयोमुच इव प्रचीयन्ते संघीभवन्ति । यद्वा शब्दतन्मात्रारूपास्ते ॥११२॥

**अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् ।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते ॥११३॥**

अथ—इदम्, आन्तरमन्तर्भवं ज्ञानमात्मसम्बन्धि ज्ञानं साक्षिसाद्यमितिभावः । स्वस्य रूपस्य व्यक्तये स्फुटतायै शब्दत्वेन शब्दभावेन विवर्त्तते वागात्मना ज्योतिषा पश्यतीति भावः । अतात्त्विकोऽन्यथा भावो विवर्त्तः । वाच एवात्मत्वमिति शाब्दाः ॥११३॥

**स मनोभावमापद्य तेजसा पाकमागतः ।**
**वायुमाविशति प्राणमथासौ समुदीर्यते ॥११४॥**

सोऽनुभविता संकल्पात्मकं मन आपद्य प्राप्य तेजसा ब्रह्मणा, तेजो वै ब्रह्म। यद्वा जाठराग्निना पाकं विलक्षणतेजः संयोगम्। आगतः प्राप्तः। प्राणवायुमाविशति। ततः समुदीर्यत उच्चार्यते ॥११४॥

**अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः।**
**तद्धर्मेणसमाविष्टस्तेजसैवविवर्तते ॥११५॥**

जीवस्य—आश्रयतां गतो वायुः प्राणवायुर्जीवस्याश्रयः। यत्र प्राणवायुर्नतिष्ठति तत्र जीवोऽपि न तिष्ठति, मृतेषु व्यभिचारतः। तथा च भगवान् गोरक्षनाथःप्राह—गोरक्षसंहितायाम्—आक्षिप्तो भुजदण्डेन यथोच्छलति कन्दुकः। प्राणापानसमाक्षिप्तस्तथा जीवो न तिष्ठति॥ ज्ञानरूपशब्देन समाविष्टो जाठराग्निसहकारेणैव शब्दरूपमादाद्धीति, जेगिल्यते च कण्वम् ॥११५॥

**विभज्य स्वात्मनो ग्रन्थीन्, श्रुतिरूपैः पृथग्विधैः।**
**प्राणो वर्णानभिव्यज्यवर्णेष्वेवोपलीयते ॥११६॥**

प्राणः प्राणवायुः स्वात्मनः स्वस्य ग्रन्थीन् कादिवर्णान्, विभिन्नरूपैः श्रवणै र्विभागं विधाय वर्णांश्चाभिव्यज्य प्रकाश्य तत्रैव निलीनो भवति।—तथा च महर्षिः श्रीपाणिनिः "आत्मा बुद्ध्यासमेत्यार्थान्मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥ सोदीर्णोमूर्ध्न्यभिहतो वक्त्रमापद्यमारुतः"। वर्णाञ्जनयते ॥११६॥

**अजस्रवृत्ति र्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते।**
**व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते ॥११७॥**

सर्वत्र विद्यमानोऽपि शब्दः सूक्ष्मत्वान्नोपलभ्यते, तथापि व्यजनाद् वायुरिव शब्दोऽपि तद्ग्राहकयन्त्रेण गृहीतो भवति ॥११७॥

**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।**
**विवर्तमाना स्थानेषु सैषाभेदं प्रपद्यते ॥११८॥**

तस्य शब्दस्य प्राणवायौ या शक्तिरस्ति । या च बुद्धौ व्यव, स्थिता, सैषा धीशक्तिः प्राणसहचरिता, स्थानेषु—कण्ठताल्वादिषु प्रतिभासमाना वर्णभेदं प्रपद्यते ११८॥

**शब्देष्वेवाश्रिताशक्तिर्विश्वस्यास्य निबन्धिनी ।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते ॥११६॥**

अस्य विश्वस्य निबन्धिनी व्यवहारसंचालिका शक्तिः शब्देषु एव आश्रिता । नहि शब्दं विना क्वापि वाच्यवाचकसम्बन्धो दृष्टचरः । अयं—भेदरूपो व्यवहारो यः शब्दो नेत्रं ज्ञापकं यस्य सः यदुक्तं च वागेवार्थं पश्यति वाग्ब्रवीतीत्यादि ॥११६॥

**षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः ।**
**तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः ॥१२०॥**

यतः षड्जादिभेदोऽपि शब्देनैव हि व्याख्यातो निरूप्यते, समग्रं गेयव्यवहारतत्त्वं शब्दाधीनमिति । तदुक्तं तन्त्रशास्त्रे—सप्त-स्वरास्त्रयोग्रामा मूर्च्छनाश्चैकविंशतिः । तालास्त्वेकोनपञ्चाशत्तिस्रो मात्रा लयास्त्रयः ॥ इत्यादि । निश्रिता—आश्रिताः । शब्दमात्रासु सर्वा अर्थविधाः ॥१२०॥

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।**
**छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥१२१॥**

अयं संसारः शब्दस्य परिणामः । छन्दोभ्यः वेदेभ्यः भूरिति व्याहरन् भूमिमसृजत् । यद्वाच्छन्दांसि तत्त्वानि तेभ्यः, एतद्विश्वं व्यव-

र्तत। एवेति निश्चये। उपादानसमसत्ताककार्यापत्तिः परिणामः। उपादानविषमसत्ताककार्यापत्तिर्विवर्त्तः रज्जुदधिनी ॥१२१॥

**इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया।**
**यां पूर्वाहितसंस्कारो बालोऽपि प्रतिपद्यते ॥१२२॥**

कर्त्तव्यस्य प्रकार इति कर्त्तव्यता, त्वयेदमित्थं कर्तव्यमिति। असदपि वस्तु शब्देनोदीर्यते, सदपि शब्दाभावान्नोच्यते जन्मान्तरीय संस्कारानुगो बालोऽपि यां प्रतिपद्यते, शब्दव्यवहारं विना न सिध्यति किमपि ॥१२२॥

**आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम्।**
**स्थानानामभिघातश्च न विना शब्दभावनाम् ॥१२३॥**

जन्मान्तरीय संस्कारा नाऽभविष्यंश्चेत्प्राणिनः स्वे स्वे शब्द-व्यवहारे प्रवृत्तिं नाशक्ष्यन्। आद्यः प्रथमः करणविन्यास इन्द्रिय योगः। स्थानानां कण्ठताल्वादीनामभिघातः, अभ्याहननं शब्द भावनां विना न स्यात् ॥१२३॥

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिवज्ञानं सर्वं शब्देन भासते ॥१२४॥**

स प्रत्ययो ज्ञानं संसारे नास्ति, यः शब्दानुगमं विना स्यात्। कृत्स्नमपि ज्ञानं शब्दविषयकमिति। शब्दः प्रकाशकः अर्थः प्रकाश्यः। वस्तुप्रत्यक्षेऽपि शब्दं विना परिचयो न भवति। सर्वं ज्ञानं शब्दसंसृष्टमित्याचक्षाणा नापास्ताः ॥१२४॥

**वाग्रूपता चेन्निष्क्रामेदवबोधस्य शाश्वती।**
**न प्रकाशः प्रकाशेत साहिप्रत्यवमर्शिनी ॥१२५॥**

प्रत्यवमर्शिनी प्रकाशस्यापि प्रकाशिका । व्यवसायज्ञानस्य प्रकाशकमनुव्यवसायज्ञानम् । इत्थं तु सर्वेषां प्रकाशकः परमेश्वर एव, यद्वाचानभ्युदितमिति, तथा पीतरापेक्ष्येदमन्वगादि ॥१२५॥

**सा सर्वविद्याशिल्पानां कलानां चोपबन्धिनी ।**
**तद्वशादभिनिष्पन्नं सर्वंवस्तु विभज्यते ॥१२६॥**

सा वाग्रूपता, उपबन्धिनी ज्ञापिका। वाग्रूपतावशात्सर्वं वस्तु विभज्यते। लोकनाथोऽयमिति ॥१२६॥

**सैषा संसारिणां संज्ञा बहिरन्तश्च वर्तते ।**
**तन्मात्रामप्यतिक्रान्ते, चैतन्यं सर्वजन्तुषु ॥१२७॥**

सा—एषा वाक् सर्वत्र व्यवहारज्ञापिका, वाङ्मात्रामतिक्रान्ते सति वाग्व्यवहाराभावे चैतन्यं वदद् वाग् भवति ॥१२७॥

**अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः ।**
**तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्टकुड्यवत् ॥१२८॥**

सर्वजलमूलकूलतूलफलादि व्यापारेषु, सर्वान् देहिनो वाक् प्रवर्तयति। तदभावेऽयं विसंज्ञोलोष्टकाष्टकुड्यतुल्यो भवति। प्राण प्रस्तावे स्पष्टम्॥१२८॥

**प्रविभागे यथा कर्त्ता तया कार्ये प्रवर्तते ।**
**अविभागे तथा सैव कार्यत्वेनावतिष्ठते ॥१२९॥**

स्वप्नेपि पुष्णाति—प्रविभागे—जाग्रद्दशायां यथा कर्त्ता देवदत्तादिस्तया वाचा कार्ये स्वाभिलषिते प्रवर्तते। तथा—अविभागे स्वप्ने सैव वाक् कार्यत्वेनोपस्थिता भवति। स्वप्नेऽपि व्यासो वाग्व्यवहारः ॥१२९॥

शब्द एव परमेश्वर एतस्मात्, एष शब्दः साधुः प्रयोक्तव्यः, एषोऽसाधुरप्रयोक्तव्यः, एष शब्दसंस्कारः। सा—एषा परमात्मनः सिद्धिः प्राप्तेरुपायः स्वर्गे लोके कामधुग् भवतीति श्रवणात्। तथाच —भगवान् गोरक्षः— यं यं शृणोति कर्णाभ्यां प्रियमप्रियमेव वा। तंतमात्मेति विज्ञाय प्रत्याहरति योगविद् इत्यादि ॥१३३॥

**न जात्वकर्तृकं कश्चिदागमं प्रतिपद्यते।**
**बीजं सर्वागमापाये त्रय्येवादौव्यवस्थिता ॥१३४॥**

आगमं मन्वादिशास्त्रं जातु कदाचिदपि कश्चित्प्रेक्षावान्, अकर्तृकं न प्रतिपद्यते, कर्तृकं स्वीकरोत्येव। सर्वागमाभावे महाकल्पादौ बीजत्वेन त्रयी वेदत्रयी व्यवस्थिता भवति, यस्य निःश्वसितं वेदाः ॥१३४॥

**अस्तं यातेषु वादेषु कर्तृष्वन्येष्वसत्स्वपि।**
**श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते ॥१३५॥**

वादेषु—ऋषिमुनिमहात्मप्रणीतेषु ग्रन्थेषु, अस्तं यातेषु गतेषु विनष्टेषु सत्सु। अन्येषु कर्तृषु—असत्सु—अपि, एतादृशेऽपि काले ऽनुवर्तमानं धर्मं लोका न जहति ॥१३५॥

**ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते।**
**धर्मो ज्ञानस्य हेतुश्चेत्तस्याम्नायो निबन्धनम् ॥१३६॥**

तपोबलेन कस्यापि ज्ञानोदयेऽपि, तत्र शास्त्रं बाधकं नास्ति। यतो हि तज्ज्ञानं धर्मविरहितं न स्याद् धर्मनिर्णयः शास्त्राधीन एवेति भावः ॥१३६॥

**वेदशास्त्राविरोधी च तर्कश्चक्षुरपश्यताम्।**
**रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥१३७॥**

केवलवाक्यस्वरूपाद् वाक्यार्थस्तर्कं विना निश्चितो न भवति। तर्को वेदशास्त्राविरोधी, अपश्यतामपेक्षितः ॥१३७॥

**सतोऽविवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी।**
**इतिन्यायो बहुविधस्तर्केण प्रविभज्यते ॥१३८॥**

ग्रहं संमार्ष्टि—असतोऽपि बहुत्वस्यात्र तर्केण ग्रहः। नवसोमर सभाजनं ग्रहशब्देनेष्टः। पारार्थ्यं—यथा नक्षत्रं विलोक्य वाचं विसृजेत्—अत्र तर्केण नक्षत्रोदयकालोगृह्यतेऽन्यथा दिवापि तत्संभवः, न वाग् विसर्गः। रात्रावदर्शनेऽपि विसर्गः। लैङ्गिकी—अर्थस्य व्यक्तिः—यथा अक्ताः शर्करा इत्यत्र मीमांसायां तेजो वैघृतं पठितं वर्ततेऽत्र घृतस्य स्तुतिरूप लिङ्गाद् हेतोः शर्करा घृतसंश्लिष्टा गृह्यतेऽतस्तर्को वेदाविरुद्ध आश्रीयते ॥१३८॥

**शब्दानामेव सा शक्तिस्तर्को यः पुरुषाश्रयः।**
**शब्दाननुगतो न्यायोऽनागमेष्वनिबन्धनः ॥१३९॥**

वाक्यभेदादिज्ञानलक्षणस्तर्कः शब्दानामेव सा शक्तिः। अनागमेषु—शास्त्रनिरपेक्षेषु। शब्दशक्त्याऽसंपृक्तः। न्यायः—अनिबन्धनः नागमार्थनिर्णयप्रदः ॥१३९॥

**रूपादयो यथा दृष्टाःप्रत्यर्थं यतशक्तयः।**
**शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥१४०॥**

विषापहारे शब्दसामर्थ्यं स्फुटमेव। आदिना—प्रेषणादि संग्रहः। मन्त्रपाठादिभिरदृष्टफलजनकञ्च। अन्यत्र यतशक्तयः स्पष्टा एव सन्ति ॥१४०॥

**यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम्।**
**साधूनां साधुभिस्तस्माद् वाच्यमभ्युदयार्थिभिः ॥१४१॥**

यथा—एषां शब्दानां तत्र स्वस्वविषये सामर्थ्यं शक्तिः । एवं साधूनां धर्मेऽपि प्रतीयताम् । तस्माद् अभ्युदयार्थिः साधुभिः शब्दैः करणभूतैर्वाच्यम् ॥१४१॥

**सर्वोऽदृष्टफलानर्थानागमात्प्रतिपद्यते ।**
**विपरीतं च सर्वत्र शक्यते वक्तुमागमे ॥१४२॥**

सर्वो लोकः—अदृष्टफलजनकान्, यागादीन् "यजेत स्वर्गकामः" इत्येवं रूपा दागमात्प्रतिपद्यते बुध्यते । विपरीतमपि तस्मादेव फल मसाधूनाम् ॥१४२॥

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः ।**
**अविच्छेदेन शिष्टानामिदंस्मृतिनिबन्धनम् ॥१४३॥**

दृष्टादृष्टफलाभिधेयप्रतिपादकतया, एषा व्याकरण स्मृतिः वाच्यावाच्यविषया, शिष्टानामिदमविच्छेदेन स्मृतिनिबन्धनम् । पारम्पर्येण विच्छेदाभावः ॥१४३॥

**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।**
**अनेकतीर्थभेदायास्त्रय्यावाचः परं पदम् ॥१४४॥**

"परावाङ् मूलचक्रस्था पश्यन्ती नाभि संस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ विभिन्नस्थानरूपायाः त्रय्या वाचः परम्पदं" लभ्यते शब्दात्मनिष्ठैः ॥१४४॥

**तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम् ।**
**स्वभावज्ञैश्च भावानां दृश्यन्ते यतशक्तयः ॥१४५॥**

विभागः प्रकृतिप्रत्ययादिरूपः सच भू तव्य-दादिषु । अविभागः—एतत्संज्ञाफलभूत विभक्तीतरसमभिव्याहारानपेक्षाविरहः, अर्थात्तदनिष्पन्नः । भावानां पदार्थानाम् ॥१४५॥

**अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।**
**शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ॥१४६॥**

कर्तृशून्यामनादिमनश्वरां श्रुतिं वेदमाहुः । सृष्टिकाले शिष्टै निबध्यमानापि स्मृति र्न व्यवच्छिद्यते, वेदानुगता ॥१४६॥

**अविघाताद्विवृत्तनामभिख्यास्वप्नवच्छ्रुतौ ।**
**भावतत्त्वं तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः ॥१४७॥**

श्रुतौ वेदे विवृत्तानां प्रकाशितानां पदार्थाना मविघाताद् विघातं न कृत्वा हेतुभ्यां भावतत्त्वं पदार्थतत्त्वं विज्ञाय स्मृतिर्विहिता । यथा स्वप्ने दृष्टानां जाग्रदन्हसि स्मरणम् ॥१४७॥

**कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।**
**चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥१४८॥**

कायशुद्धिश्चिकित्सया, वाग्विशुद्धिर्लक्षणेन व्याकरणेन, बुद्धि विशुद्धि योगशास्त्रेण, तथा चाचलनाथविषये पद्यंस्मर्यते—योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन योऽपाकरोत्तं प्रवरं यमीशं पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥१४८॥

**शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते ।**
**तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ॥१४९॥**

गौरिति प्रयोक्तुमिष्टे यः संस्कारहीनः शब्दः, गाव्यादिः, तं सास्नादिमत्यर्थे निविशमानं स्थानं लभमानं शब्दमपभ्रंशमुशन्ति । साधुत्वविकृतिरपभ्रंशः ॥१४९॥

**अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।**
**निमित्तभेदा त्सर्वत्र साधुत्वं तु व्यवस्थितम् ॥१५०॥**

अस्वशब्दोऽश्वे, गोणीशब्दो गवि, साधुताभावेऽपि साधुतां विषयान्तरे धनाभावेचावपने चावहतः। इत्थं निमित्तभेदात्सर्वत्र साधुत्वस्य व्यवस्था ॥१५०॥

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः।**
**तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥१५१॥**

साधुशब्दविषयकस्मरणेनतेऽपभ्रंशाः प्रत्ययोत्पत्तिहेतवो भवन्ति, अर्था दर्थाव बोधजनका भवन्ति। तनोऽभेदमिवापन्नाः। तदुक्तं सिद्ध· शावरनाथेन शावरभाष्ये—तदशक्तिश्चानुरूपत्वा–दिति ॥१५१॥

**न शिष्टैरनुगम्यन्ते पर्याया इव साधवः।**
**ते यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥१५२॥**

यतः शिष्टैः पर्यायाः साधव इव तेऽसाधवो व्याकरणशास्त्रेण नानुगृह्यन्ते तस्मात्साक्षादवाचका असाधवः ॥१५२॥

**अम्बाम्बेति यथा बालः शिक्षमाणः प्रभाषते।**
**अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः ॥१५३॥**

अम्बाम्बेति शिक्षमाणोऽपि यथा बालोऽव्यक्त मपभ्रंशं प्रभाषते, परन्तु तद्विदाम्, अव्यक्तप्रकृतिं व्यक्तमवगच्छतां तेन अव्यक्तेन व्यक्ते शुद्धे शब्दे निश्चयो भवति। लक्षितलक्षणयाऽवबोधो जायते ॥१५३॥

**एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।**
**तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥१५४॥**

इत्थं साधौ प्रयोक्तव्ये गौरित्यादि प्रयोगविषये योऽपभ्रंशो गावीत्यादिरूपः शब्दः प्रयुज्यते तेन साधुव्यवधानेन साक्षादर्थो न विधीयते, बोधकतापि साध्वनुमिता ॥१५४॥

**पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।**
**प्रसिद्धिमागता येषु तेषां साधुरवाचकः ॥१५५॥**

पारम्पर्यात्कालक्रमवशात्, अभिधातृषु वक्तृष—विगुणेषु विकारवत्सु सत्सु, अध्ययनाध्यापनक्रमविनाशेन यद्वा दन्तादिभङ्गेन जायमाना अपभ्रंशाः शब्दाः, येषु प्रसिद्धिं निरूढिमागता स्तेषां मनुजानां कृते साधुशब्दप्रयोगोऽपि—अवाचकः, असाधुर्जनयति तु ज्ञानम् ॥१५५॥

**दैवीवाग्व्यवकीर्णेयमशक्तैरभिधातृभिः ।**
**अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥१५६॥**

इयं दैवीवाक्, सुरभारती अशक्तैर्मोहादिभिरसमर्थैः, अशुद्धाऽव्यवस्थितसांकेतिकपदविन्यासलोलुपैर्मूढैरिति भावः । व्यवकीर्णा सङ्कोच-मापादिता । अभिधातृभिः कथकैः । अस्मिनवादेऽनित्य-दर्शिनां बुद्धिभ्रमः ॥१५६॥

**उभयेषामविच्छेदादन्यशब्दविवक्षया ।**
**योऽन्यःप्रयुज्यतेशब्दोनसोऽर्थस्याभिधायकः ॥१५७॥**

अन्यशब्दविवक्षया योऽन्यः शब्दः प्रयुज्यते सः—अस्यार्थस्य घटार्थस्याभिधायको वाचको न भवति । तत्र तत्सामर्थ्याभावात् । गोरक्षपुरमिति प्रयोक्तव्ये वाराणसीति प्रयुक्ते कस्यापि शकुलगोरक्ष-पुरार्थप्रतिपत्ति र्न यत्नशतेनापि संभवति । उभयेषां प्रयुक्ताप्रयुक्तानां शिष्टैरविच्छेदाद्विच्छेदाभावात्, उभयत्र शक्तिस्तथापि परपक्षः—धर्मायनोऽलम् । तदुक्तं—महाभाष्ये श्रीमहर्षिणा—"समानायामर्थावगतौ शब्दैश्चापशब्दैश्चशास्त्रेण धर्मनियमः क्रियते" ॥१५७॥

---

गोरक्षराज्यनेपालसिद्धाचलमृगस्थली ।
व्याख्यावाक्यपदीयस्य तत्र सम्पूरिता शिवात् ॥ १ ॥

श्रीशान्तिनाथशिष्येण पयालाग्रामवासिना ।
योगिशङ्करनाथेन शब्दाब्धिमन्दराद्रिणा ॥ २ ॥

परीक्षादुस्तरं सिन्धुं तत्तुमेषा भविष्यति ।
टीकावाक्यपदीयस्य ब्रह्मकाण्डस्य धीमताम् ॥ ३ ॥

कवेर्नरहरेर्योगाद्यत्सौस्थ्यं लब्धवानहम् ।
तस्योपकृतये काचित् प्रत्यभिज्ञा न लभ्यते ॥ ४ ॥

अवेद्यनाथेन यतीन्द्रवर्त्मनाऽऽ
त्मना मुदा वाक्यपदीयपुस्तकम् ।
स्वकीयरिक्थेन विकाशितं मुदे
विचक्षणानां पदवाक्यवर्तिनाम् ॥ ५ ॥

कुलनाथाभिन्नमतिदेवीनाथस्ययोगिनः ।
सौहार्दमुपकारं च स्मृत्वा को नाभितृप्यति ॥ ६ ॥

व्योमेष्वाकाशनाथाब्धिदुर्गादोरगनन्दकौ ।
सृष्ट्यब्दे शान्तिनाथान्तेवासीव्याचष्टशङ्करः ॥ ७ ॥

रसाभ्राभ्राक्षिवैक्रान्तेनेपालेखर्षिखेन्दुगे ।
पदार्थमथिनीव्याख्यागतावाक्यपदीयगा ॥ ८ ॥

भीष्मज्ञानिकृपालुकेशववरविश्रीकान्तभीमस्मृति,—
क्ष्माभृद्द्रव्यमहेन्द्रराघवयशःश्रीशान्तिनाथाच्युताः ।
येषां ज्ञानलवेन भर्तृहरये व्याख्यामिमामार्पयं
विद्यास्थानगतोगुरुर्विजयते गाधेयगम्भीरधीः ॥ ९

---